तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥ ८३ ॥
सम्यग्विज्ञानसंपन्ने नोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥ ८४ ॥
गोत्रस्थितिस्तु या तेषां क्रमादायाति धर्मतः ।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥ ८५ ॥

( प्रश्नप्रकार )

काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥ ८६ ॥
केन कस्मिन्कदा कस्मात् पृच्छेदेवं सभागतः ।
एवं पृष्टः स यद् ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह ॥ ८७ ॥
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।
मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेत् ॥ ८८ ॥

( प्रतिनिधि )

समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणि ।
प्रतिवादी स विज्ञेयः प्रतिपक्षश्च यः स्वयम् ॥ ८९ ॥

---

83 व्य मा p 281 ( attributes to both बृहस्पति and कात्यायन ) वीर० p 30 ascribes it to बृहस्पति

84 वीर० p 31

85 वीर० p 29

86 स्मृतिच० III p 70, व्य मा p 286, परा. मा III p 52, वीर p 47 मिता० ( on या III 5 ) quotes this and the following two as from स्मृत्यन्तर. अपरार्क also p 605 quotes them without citing the name स वि p 75 quotes this verse as कात्यायन's gloss on the words 'केन कस्मिन् कदा ... गत' which it attributes to मनु

87 स्मृतिच० III p 70, परा मा III p 52 वीर० p 47 ( which reads सभागतम् ), व्य मा p 286 (first half)

88 मिता० ( on या II 5 ), अपरार्क p 605 स्मृतिच० III p 72, परा. मा III p 55 वीर० p 52

89 स्मृतिच० III p 72, अपरार्क p 639, स वि p 80

अधिकारोभियुक्तस्य नेतरस्यास्त्यसङ्गते ।
इतरोप्यभियुक्तेन प्रतिरोधीकृतो मत ॥९०॥
अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥ ९१ ॥
दासाः कर्मकरा शिष्या नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्याः स्युः यस्त्वतोन्य स दण्डभाक् ॥ ९२ ॥
ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे ।
अन्येषु चातिपापेषु प्रतिवादी न दीयते ॥ ९३ ॥
मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥ ९४ ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्य कर्ता तु विवदेत्स्वयम् ॥ ९५ ॥

( आह्वान )

धर्मोत्सुकानभ्युदये रोगिणोथ जडानपि
अस्वस्थमत्तोन्मत्तार्तस्त्रियो नाह्वानयेन्नृप ॥ ९६ ॥

---

90 स्मृतिच॰ III p 73 अपरार्क p 639 ( which reads प्रहितोधिकृता मत ) वीर॰ p 52 ( first half ) स वि p 80

91 व्य मा p 287 ( ascribes it to नारद and कात्यायन ) अपरार्क p 639 स्मृतिच॰ III p 71 परा मा III p 53 वीर॰ p 48 कृत्यकल्पतरु ascribes it to नारद and कात्यायन

92 अपरार्क p 639, स्मृ तच॰ III p 71 परा मा III p 54

93 व्य मा p 287 अपरार्क p 639 स्मृतिच III p 75 वीर॰ p 54 अपरार्क reads अन्येष्वसद्यवादेषु and स्मृतिच reads अन्येष्वसभ्य॰ and व्य मा reads अन्येष्वसद्भ॰

94 व्य मा p 287, अपरार्क p 639 स्मृ तच॰ III p 75 वीर p 54 व्यवहारतत्त्व p 200

95 व्य मा p 287 अपरार्क p 639 ( reads न दाप्य स्यात् ) वीर॰ p 54 (reads कर्तापि) स्मृतिच॰ III p 75 (reads दाप्य स्यादर्थिप्रत्यर्थि नोरपि) व्यवहारतत्त्व p 200

96 स्मृतिच॰ III 74 परा मा III p 51 वीर p 52 ascribes अकल्प बालस्थविर विषमस्थ क्रियाकुलान् । कार्यातिपातिव्यसनि नृपकार्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृप to कात्यायन but they are omitted here as these are ascribed to हारीत by स्मृतिच॰ and परा मा and to नारद by व्य म

न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमा कन्या ता प्रातिप्रभुका स्मृता ॥ ९७ ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामादानमिष्यते ॥ ९८ ॥
सदाक्षोनुत्तरीयो वा मुक्तकेशः सहासनः ।
वामहस्तेन वा वादं वदन्दण्डमवाप्नुयात् ॥ ९९ ॥
आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥ १०० ॥
हीने कर्मणि पञ्चाशन्मध्यमे द्विशतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥ १०१ ॥
कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तु स्यात्तन्मूल्यं वाथ राजनि ॥ १०२ ॥

(आसेधः)

उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योसौ नृपाज्ञया ॥ १०३ ॥
आवेद्य तु नृपे कार्यमसंदिग्धे प्रतिश्रुते ।
तदासेधं प्रयुञ्जीत यावदाह्वानदर्शनम् ॥ १०४ ॥

---

97 स्मृतिच० III 74 परा० मा० III p 51 (which reads स्वजाति-प्रभुका चैव तथा नाह्वानयन्नृप) वीर० p 52 मिता० on या० II, 5 cites this as स्मृत्यन्तर

98 स्मृतिच० III p 74, परा० मा० III p 51, वीर० p 53 मिता० on या० II 5 cites as स्मृत्यन्तर

99 अपरार्क p 605 व्य० मा० p 286 स० वि० 76 अपरार्क reads 'वा स्रग्वी,' for वा वादं व्य० मा० reads मुक्तकच्छ

100 अपरार्क p 607 स्मृतिच० III p 76, परा० मा० III p 51

101 अपरार्क p 607 स्मृतिच० III p 76, परा० मा० III p 51 अपरार्क reads मध्यमेन शतावरम् and पञ्चशतावरम् परा० मा० reads मध्यमे तु शतावरः

102 स्मृतिच० III p 76 स० वि० p 82 (reads शक्तितः for यत्नतः)

103 वीर० p 55 स्मृतिच० III p 76 ascribes it to व्यास

104 वीर० p 55

आसेधयोग्य आसिद्ध उत्क्रामन्दण्डमर्हति ॥ १०५ ॥

( अनासेध्याः )

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेध्य स दण्ड्यो न त्वतिक्रमी ॥ १०६ ॥
वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिता ।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥ १०७ ॥
व्याध्यार्ता व्यसनस्थाश्च यजमानास्तथैव च ।
अनुत्तीर्णाश्च नासेध्या मत्तोन्मत्तजडास्तथा ॥ १०८ ॥
न कर्षको बीजकाले सेनाकाले तु सैनिकः ।
प्रतिज्ञाय प्रयातश्च कृतकालश्च नान्तरा ॥ १०९ ॥
उद्युक्तः कर्षकः सस्ये तोयस्यागमने तथा ।
आरम्भात्संग्रहं यावत्तत्कालं न विवादयेत् ।
आसेधयस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः ॥ ११० ॥
अभियुक्तश्च रुद्धश्च तिष्ठेयुश्च नृपाज्ञया ।
न तस्यान्येन कर्तव्यमभियुक्तं विदुर्बुधाः ॥ १११ ॥
एकाहद्वयहाद्यपेक्षं देशकालाद्यपेक्षया ।
कृताय साधिते कार्ये तेन भक्तं प्रदापयेत् ॥ ११२ ॥

---

105 वीर॰ p 56 स्मृतिच॰ III p 68 ascribes it to व्यास

106 स्मृतिच॰ III p 67, परा मा III p 48, वीर॰ p 56, व्य मा p 9 परा मा reads व्यवहारोत्सवादिभि अनासेध्यैः and अतिक्रमात् व्य म, has the last two, वीर॰ has अनासेध्यै and अतिक्रमम्

107 स्मृतिच॰ III p 68, परा मा III p 48, वीर॰ p 56

108 स्मृतिच॰ III p 68, परा मा III p 49, वीर॰ p 56 (has first half)

109 स्मृतिच॰ III p 68, परा मा III p 49, कृत्यकल्पतरु (has latter half)

110 कृत्यकल्पतरु, स्मृतिच॰ III p. 69, परा मा III 49 (which reads बप स्यागमने ) वीर p 56 ( last line ), व्य. म. p 9 ( last line ). The first three omit the last line.

111 कृत्यकल्पतरु

112 वीर॰ p 57, अपरार्क p 607 ( reads नेता for तेन ) has latter half only.

देशकालवयःशक्त्यापेक्षं भोजनं स्मृतम् ।
आकारकस्य सर्वत्र इति तत्त्वविदो विदुः ॥ ११३ ॥

( प्रतिभूत्वेनाग्राह्याः )

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव संशयस्थाश्च न क्वचित् ॥ ११४ ॥
नैव रिक्थी न रिक्थश्च न चैवात्यन्तवासिनः ।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥ ११५ ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
जीवन्यापि पिता यस्य तथैवेच्छाप्रवर्तक ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥ ११६ ॥
अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद् दूताय वेतनम् ॥११७॥
द्विजातिः प्रतिभूहीनो रक्ष्य स्याद् बाह्यचारिभिः ।
शूद्रादीन्प्रतिभूहीनान् बन्धयेन्निगडेन तु ॥ ११८ ॥

---

118 वीर० p. 57, अपरार्क p 607 ( reads देश: कालो वयः शक्तिरपेक्ष्या भोजने तथा and धर्मविदो for तत्त्वविदो )

114 स्मृतिच० III, p. 78 ( and p. 318 ), मिता० ( on या. II. 57 ), वि. र. p. 89, परा. मा. III. p. 57 and pp. 253 254, वीर० p. 58 and 330 ( has 114 116 ). परा. मा. at p. 254 reads ' निरुद्धो दण्डितश्चैव शिल्पिनश्चाव्रवोढृगुः' and adds देशाचारेण दाप्याः स्युर्दुग्धान् संपीड्य दापयेत् "

115 स्मृतिच० III.p. 78 and 318, वि र. p. 30, परा. मा. III. p. 57 and also p. 254, वीर० p 58. वि र , परा. मा. p. 254 and मिता० read मित्रं च for रिक्थ.

116 मिता० ( on या. II. 57 ), स्मृतिच० III. p. 78, परा मा. III p. 57, वि. र. p. 39 मिता० and वि. र० read प्रतिभूः स्वक्रियां प्रति and परा० मा. reads प्रतिभूत्वक्रियां. All except मिता० omit the half जीवन्यापि &c.

117 मिता० ( या. II. 10 ), व्य. मा. p. 289, स्मृतिच० III p. 78, परा. मा. III. 58, वीर० p. 59, स. वि. p. 83, व्यवहारतत्त्व p. 202. व्य. मा reads वादयोग्यध, मिता० reads कार्ययोग्यस्तु; वीर० and परा. मा. read भृत्याय for दूताय, स वि. reads कार्ययोग्यस्य वादिनः व्यवहारतत्त्व reads योग्यस्तु वादिनः which is a good reading.

118 परा. मा. III. p. 58

अतिक्रमेपयाते च दण्डयेत्त पणाष्टकम् ।
नित्यकमापरोधस्तु न कार्यं सर्ववर्णिनाम् ॥११९॥
महीतग्रहणो न्यायं न भवत्या महीभृता ।
तस्य वा तत्समर्थं स्यात्स्थापयेद्वा परस्य तत् ॥१२०॥

( अभियोक्त्रादानामुक्तिक्रम )

तत्राभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्तत परम ॥ १२१ ॥
यस्य स्यादधिका पीडा कार्यं वाप्यधिक भवेत् ।
पूर्वपक्षो भवेत्तस्य न च पूर्व निवेदयेत् ॥१२२॥
यस्य चार्थगता पीडा शारीरी चाधिका भवेत् ।
तस्यार्थिवादो दातव्यो न च पूव निवेदयेत् ॥ १२३ ॥

( प्रतिज्ञास्वरूपम् )

निवेद्य काल वर्ष च मास पक्ष तिथि तथा ।
वेला प्रदेश विषय स्थान जात्याकृती वय ॥ १२४ ॥
साध्यप्रमाण द्रव्य च सख्या नाम तथात्मन ।
राज्ञा च क्रमशो नाम निवास साध्यनाम च ॥ १२५ ॥

---

119 परा मा III p 58

120 व्य मा p 287 स्मृतिच० III p 78 दाडगतन्द व्य मा and दोडरानन्द read न्यायो for याय तस्यात for तस्य वा and परत्र for परस्य

121 अपरार्क p 611, स्मृतिच० III p 79 परा मा III p 58 वीर० p 57 व्य मा p 289 (reads तयोरुक्तौ for तयोरन्ते) स वि p 83

122 व्य मा p 290 व्यवहारतत्त्व p 200 परा म III p 59 स्मृतिच० III p 79, स वि p 83 (reads one verse as यस्य च अधिका पीडा अकार्यं साधिक भवत् । तस्य विवादा०)

123 व्य मा p 291, स्मृतिच० III p 79 परा मा III p 59 स्मृतिच० reads कार्यं वा ह्याधिक भवत् and परा मा read कार्यं वाप्यधिक

124 विश्वरूप (on या II 6), व्य मा p 295 अपरार्क p 608, स्मृतिच० III p 81, परा मा III p. 6? वीर० p 62 परा मा reads प्रवेश for प्रदेश and अपरार्क reads वेला प्रदेश विषय विश्वरूप has वेलाप्रदेश

125 विश्वरूप (on या II 6) व्य मा p 295 अपरार्क p 608 परा मा III p 62 स्मृतिच० III p 81, वीर० p 6? विश्वरूप reads साध्यार्थमान स्मृतिच० reads साध्यद्रव्यप्रमाण वीर० and अपरार्क read साध्य प्रमाण द्रव्य च व्य मा reads साध्यमप च

क्ष्मातिपतॄणां नामानि पीडां चाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षं संकीर्त्य कल्पयेत् ॥१२६॥
देशश्चैव तथा स्थानं संनिवेशस्तथैव च ।
जातिः संज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥ १२७ ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥ १२८ ॥
रागादीनां यदेकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत्सर्वं वादिनः फलकादिषु ॥ १२९ ॥
अधिकान् शोधयेदर्थान् न्यूनांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत्तावद्यावत्पक्षः प्रतिष्ठितः ॥ १३० ॥
पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥ १३१ ॥
अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः ।
चौरवच्छासयेत्तं तु धार्मिकः पृथिवीपतिः ॥ १३२ ॥
सोल्लेपनं वा लभते ऽ्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छत. ॥ १३३ ॥

---

126 विश्वरूप, अपरार्क p 608, व्य मा. p. 295, परा. मा. III p. 62, स्मृतिच॰ III. p. 81, वीर॰ p. 62 व्य. मा. reads लेखयेत् for कल्पयेत्. विश्वरूप reads क्षमालिङ्गाद्यादिकालं.

127-128 अपरार्क p. 608, स्मृतिच॰ III. p 84, परा. मा. III. 62, वीर॰ p. 64. परा. मा reads देश काल तथात्मान संनिवेश and जातिसंज्ञाधिवासांश्च.

129 टोडरानन्द ( which ascribes it to both नारद and कात्यायन ), स. वि p. 79 ( which ascribes it to गोभिल ) reads अर्थिनः for वादिन॰.

130 विश्वरूप ( on या II 6 ), अपरार्क p. 611, स्मृतिच॰ III. p. 90, परा. मा. III 65. अपरार्क and परा मा read शातयेत् and last pada as यावदर्थोभिवर्णित., परा मा reads छेदयेत् and प्रतिपूजयेत्, स्मृतिच॰ reads छेदयेत्.

131 मिता॰ ( on या II. 6 ), अपरार्क p. 611, परा. मा. III. p. 67, स्मृतिच॰ III. p. 9, व्यवहारतत्त्व p. 204,

132 वीर॰ p. 71 ( which reads त्रासयेत् for शासयेत् ), व्य. मा. p. 297, व्यवहारतत्त्व p. 204

133 परा. मा. III. p. 66

यस्मात्कार्यसमारम्भाच्चिरायत्तेन विनिश्चयः ।
तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥ १३४ ॥
मतिर्नोत्सहते यत्र विवादे कार्यमिच्छतो. ।
दातव्यस्तत्र काल. स्यादर्थिप्रत्यर्थिनोरपि ॥ १३५ ॥

प्रतिज्ञादोषा. ( पूर्वपक्षदोषाः )

यश्च राष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसंकीर्ण. पूर्वपक्षो न सिध्यति ॥ १३६ ॥
बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥ १३७ ॥
देशकालविहीनश्च द्रव्यसंख्याविवर्जित. ।
साध्यप्रमाणहीनश्च पक्षोनादेय इष्यते ॥ १३८ ॥
न्यायस्थं नेच्छते कर्तुमन्यायं वा करोत्ययम् ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥ १३९ ॥
अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ १४० ॥

---

134 व्य. मा. p. 290, व्यवहारतत्त्व p 203 ( reads विनिश्चितः )

135 व्य. मा p. 290.

136 विश्वरूप (on या. II 5), मिता॰ (on या II. 6), व्य. मा. p. 290, अपरार्क p. 609, स्मृतिच॰ III. 89, परा मा. III. p. 65, वीर॰ p. 68. अपरार्क, स्मृतिच॰, परा मा. and वीर॰ read पुराराष्ट्रविरुद्धश्च

137 मिता॰ ( on या. II. 6. ), अपरार्क p. 609, व्य. मा p 290, स्मृतिच॰ III p 89, परा. मा. III p. 65, वीर. 69, स. वि p. 89. व्य. मा. reads व्यवहारेष्वनिश्चितम्, स्मृतिच॰ reads व्यवहारे सुनिश्चितम्.

138 अपरार्क p. 609 (not named), स्मृतिच॰ III p. 84, व्य. मा. p. 297, परा. मा. III p. 61, वीर॰ p. 64, स. वि. p. 87 स्मृतिच॰ and स. वि read क्रियाप्रमाणहीनश्च, वीर॰ reads क्रियामानविहीनश्च

139 विश्वरूप on या. II 6 (no name), स्मृतिच॰ III p. 89, वीर॰ p. 69. विश्वरूप reads न्याय्यं मे नेच्छते and वीर॰ reads न्याय्यं यद्यच्छते

140 विश्वरूप on या. II 6 (no name), मिता॰ on या. II 6 (no name), वीर॰ p. 66, परा. मा. III 61 and व्य. मा. p. 13 (as स्मृत्यन्तर) विश्वरूप reads सदोषं च for निराबाधं and पक्षं राजा विवर्जयेत्.

प्रतिज्ञादोषनिर्मुक्त साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदु ॥ १४१ ॥
स्वल्पाक्षर प्रभूतार्थो नि संदिग्धो निराकुल ।
विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधक ॥ १४२ ॥
यदा त्वेवविध पक्ष कल्पित पूर्ववादिना ।
दद्यात्तत्पक्षसवद्धं प्रतिवादी तदोत्तरम् ॥ १४३ ॥
श्राव्यमाणोऽर्थिना यत्र यो ह्यर्थी न विघातित ।
दानकालेऽथवा तूष्णीं स्थित्त सोऽर्थोऽनुमोदित ॥ १४४ ॥

( उत्तर सद्यो दात व कालान्तरेण वा दातव्यम् )

श्रुत्वा लेख्यगत त्वर्थं प्रत्यर्थी कारणाद्यदि ।
काल विवादे याचेत तस्य देयो न सशय ॥ १४५ ॥
सद्यो वैकाहपञ्चाहन्यह वा गुरुलाघवात् ।
लभेतासौ त्रिपक्ष वा सप्ताह वा ऋणादिषु ॥ १४६ ॥
काल शक्ति विदित्वा तु कार्याणा च बलाबलम् ।
अल्पं वा बहु वा काल दद्यात्प्रत्यर्थिने प्रभु ॥ १४७ ॥

---

141 विश्वरूप on या II 6 ( no name ), कृत्यकल्पतरु ( ascribes this and the following two verses to both कात्यायन and बृहस्पति) व्य मा p 291 (ascribes this and the next to both कात्या॰ and बृह॰) व्यवहारतत्त्व p 203 (ascribes 141-143 to both), टोडरानन्द, परा मा III p 61 (which ascribes this and the next to बृहस्पति) अपरार्क p 610 ascribes to बृहस्पति, so does स्मृतिच॰ III p 90

142 कृत्यकल्पतरु, व्य मा p 291, टोडरानन्द (which reads विरोधिकरणै and प्रतिरोधक ), परा मा III 61 (which reads अल्पाक्षरस्त्वसन्दिग्धो बह्वर्थश्चाप्यनाकुल । युक्तो विरोधिकरण) व्यवहारतत्त्व p 203 204

143 कृत्यकल्पतरु, टोडरानन्द व्यवहारतत्त्व p 204

144 कृत्यकल्पतरु

145 अपरार्क p 619, स्मृतिच॰ III p 94, व्य मा p 298, परा मा III p 69 वीर॰ p 138 व्य मा reads लखयत for लेख्यगत, अपरार्क and वीर॰ read लेखयतो

146 व्य मा p 298, स्मृतिच॰ III p 95 (which reads सद्य एकाहपञ्चाहो)

147 स्मृतिच॰ III p 95 व्य मा p 298

द्विनं मासार्धमासौ वा ऋतु- संवत्सरोपि वा।
क्रियारिथत्यनुरूपस्तु देय- काल- परेण तु ॥ १४८ ॥
व्यपैति गौरवं यत्र विनाशस्त्याग एव वा।
कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत् ॥ १४९ ॥
धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥ १५० ॥
कन्याया दूषणे स्तेये कलहे साहसे निधौ।
उपधौ कौटसाक्ष्ये च सद्य एव विवादयेत् ॥ १५१ ॥
साहसस्तेयपारुष्यगोभिशापे तथात्यये।
भूमौ विवादयेत् क्षिप्रमकालेपि बृहस्पतिः ॥ १५२ ॥
सद्य- कृतेषु कार्येषु सद्य एव विवादयेत्।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥ १५३ ॥
सद्यः कृते सद्य एव मासातीते दिनं भवेत्।
पञ्चाब्दिके त्रिरात्रं स्यात्सप्ताहं द्वादशाब्दिके ॥ १५४ ॥
विंशत्यब्दे दशाहं तु मासार्धं वा लभेत सः।
मासं त्रिंशत्समातीते त्रिपक्षं परतो भवेत् ॥ १५५ ॥
कालं संवत्सरादर्वाग् स्वयमेव यथेप्सितम्।
संवत्सरं जडोन्मत्तमनस्के व्याधिपीडिते ॥ १५६ ॥

---

148 अपरार्क p. 619, स्मृतिच० III p. 96, वीर० p. 138

149 स्मृतिच० III p. 93, अपरार्क p. 619, वीर० p. 140.

150 अपरार्क p 619, स्मृतिच० III p. 94, परा. मा III p 71, वीर० p. 140.

151 अपरार्क p. 620, स्मृतिच० III p. 94, परा. मा III p 72, वीर० p. 140.

152 वीर० p. 140 (ascribes both to बृहस्पति and कात्यायन), परा. मा. III p. 71 (ascribes it to बृहस्पति)

153 स्मृतिच० III p. 94, अपरार्क p. 619, वीर० p. 136 (reads सद्य कृतेषु कार्येषु), व्यवहारतत्त्व p 205.

154 अपरार्क p 619, स्मृतिच० III p. 95, व्य मा. p 298, वीर० p 138. व्य. मा. reads सद्यःकृते सद्यो वादः समातीते परा मा III p 70 ascribes this and the following two verses to बृहस्पति

155 अपरार्क p 619, स्मृतिच० III p 95 व्य. मा p. 298, वीर० p 138. अपरार्क reads त्रिंशत्परे for त्रिंशदब्द.

156 स्मृतिच० III p. 95, परा. मा. III p. 70 (latter half), अपरार्क p. 619 (has only first half as कालार्द्धसंवत्सरात्).

दिगन्तरप्रपन्ने वा अज्ञातार्थे च वस्तुनि ।
मूलं वा साक्षिणो वाथ परदेशे स्थिता यदा ॥ १५७ ॥
तत्र कालो भवेत्पुंसामा स्वदेशसमागमात् ।
दत्तेपि काले देय स्यात्पुन' कार्यस्य गौरवात् ॥१५८॥
पूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी तदनन्तरम् ।
पूर्वपक्षार्थसंबन्धं प्रतिपक्ष निवेदयेत् ॥ १५९ ॥
आचारद्रव्यदानेष्टकृत्योपस्थाननिर्णये ।
नोपस्थितो यदा कश्चिच्छले तत्र न कारयेत् ॥ १६० ॥
दैवराजकृतो दोषस्तस्मिन्काले यदा भवेत् ।
अबाधत्यागमात्रेण न भवेत्स पराजित. ॥ १६१ ॥
दैवराजकृतं दोषं साक्षिभि प्रतिपादयेत् ।
जैह्म्येन वर्तमानस्य दण्डो दाप्यस्तु तद्धनम् ॥ १६२ ॥
अभियुक्तोभियोक्तारमभियुञ्जीत कर्हिचित् ।
अन्यत्र दण्डपारुष्यस्तेयसंग्रहणात्ययात् ॥ १६३ ॥
याथान्यस्मिन्समाचार पारंपर्यक्रमागत' ।
तं प्रतीक्ष्य यथान्यायमुत्तर दापयेन्नृप ॥ १६४ ॥

(चतुर्विधमुत्तरम्)

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दन तथा ।
पूर्वन्यायविधिश्चैवमुत्तर स्याच्चतुर्विधम् ॥ १६५ ॥
श्रुत्वा भाषार्थमन्यस्तु यदा त प्रतिषेधति ।
अर्थत' शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम् ॥ १६६॥

---

157 स्मृतिच० III p 95 परा मा III p 70, अपरार्क p 619
158 स्मृतिच० III (first half), परा मा III p 71
159 व्य मा p 299 (ascribes to कात्यायन and नारद)
160-62 व्य मा p 299
163 व्य मा p 299
164 अपरार्क p 619 स्मृतिच० III p 96, स वि p 92 अपरार्क reads यो वा यस्मिन् and परीक्ष्य for प्रतीक्ष्य
165 मिता० (on या II 7) व्य मा p 299, वीर० p 74
166 अपरार्क p 612 व्य मा p 301, वीर० p 76, व्यवहारतत्त्व p 207 व्य मा reads यदि for यदा

अभियुक्तोभियोगस्य यदि कुर्यात्तु निह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ १६७ ॥
साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ॥ १६८ ॥
मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥१६९॥
योर्थिनार्थः समुद्दिष्टः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयादाधर्षं गुरुरब्रवीत् ॥ १७० ॥
आचारेणावसन्नोपि पुनर्लेखयते यदि ।
सोभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥१७१॥
विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा ।
जितश्चैव मयायं प्राक्प्राङ्न्यायस्त्रिप्रकारकः ॥ १७२ ॥

[ उत्तराभासा उत्तरदोषा वा ]

अप्रसिद्धं विरुद्धं यद्यत्यल्पमतिभूरि च ।
संदिग्धासंभवाव्यक्तमन्यार्थं चातिदोषवत् ॥ १७३ ॥
अव्यापकं व्यस्तपदं निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः ॥ १७४ ॥

---

167 मिता० ( on या. II. 7 ), व्य. मा p. 301, स्मृतिच० III p. 97, वीर० p. 75, स. वि. p. 92 मिता० and स. वि. read कुर्यादपह्नवम्.

168 मिता० on या. II. 7, स्मृतिच० III p. 97, स. वि. p. 92, स्मृतिच० reads तथ्यवचनं. व्य. मा. p. 300 attributes this to व्यास.

169 मिता० ( on या. II. 7 ), अपरार्क p. 612, स्मृतिच० III p. 98, स. वि. p. 92. अपरार्क reads तदा मे सुदसंनिधि.

170 व्य मा. p. 307, टोडरानन्द, वीर० p. 78. वीर० reads अर्थिनाभिहितो योर्थः and आधर्षं भृगुरब्रवीत्, टोडरानन्द reads आधर्षं मनुरब्रवीत्. व्य. मा. reads अर्थिनाभिहितो योर्थः and reads last line as प्रसन्नरछन्दन हि तत् and ascribes it to बृहस्पति.

171 मिता० ( on या. II 7 ), वीर० p. 82 ( refers to both कात्या० and बृह० ).

172 स्मृतिच० III p. 98, वीर० p. 82.

173 अपरार्क p. 614, स्मृतिच० III p 99, परा. मा. III. p. 73, वीर० p 84.

174 स्मृतिच० p. 99. व्यवहारतत्त्व p. 207 reads असत्यस्तपदव्यापि निगूढार्थं and says that भवदेव in his व्यवहारतत्त्व explained अस्तव्यस्तपदव्यापि as अनाविर्तार्थपदव्याप्त.

यद्व्यस्तपदमन्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ १७५ ॥
चिह्नाकारसहस्रं तु समयं चाविजानता ।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम् ॥ १७६ ॥
प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया नहि ।
यदेवमाह विज्ञेयं विरुद्धं तद्विहोत्तरम् ॥ १७७ ॥
जितः पुरा मयाय च त्वर्थेस्मिन्निति भाषितुम् ।
पुरा मयायमिति यत्तदून चोत्तरं स्मृतम् ॥ १७८ ॥
गृहीतमिति वाच्ये तु कार्यं तेन कृत मया ।
पुरा गृहीतं यद्द्रव्यमिति यच्चातिभूरि तत् ॥ १७९ ॥
देयं मयेति वक्तव्ये मयादेयमितीदृशम् ।
संदिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैस्तदा ॥ १८० ॥
बलायेलन चैतेन साहसं स्थापितं पुरा ।
अनुक्रमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥१८१॥
अस्मै दत्तं मया सार्धं सहस्रमिति भाषिते ।
प्रतिदत्तं तदर्धं यत्तद्विहाव्यापक स्मृतम् ॥ १८२ ॥
पूर्ववादी क्रियां यावत्सम्यङ्नैव निवेशयेत् ।
मया गृहीतं पूर्वं नो तद्व्यस्तपदमुच्यते ॥ १८३ ॥
तत्किं सामरसं काश्चिद्गृहीतं प्रदास्यति ।
निगूढार्थं तु तत्प्रोक्तमुत्तरं व्यवहारतः ॥ १८४ ॥

---

175 अपरार्क p 614, परा मा III p 73, व्य मा p 303 वीर० p 84 मिता० ( on या II 7 ) cites as स्मृत्यन्तर

176 177 स्मृतिच० III p 93, परा मा III p 73, वीर० p 84

178 स्मृतिच० III p 99 परा मा III p 74, वीर० p 84 परा मा reads भाषित and वीर० reads निवेशित

179 स्मृतिच० III p 100 परा मा III p 74, वीर० p 84 परा मा reads इति चेद्वाक्य

180 स्मृतिच० III p 100, परा मा III p 74, वीर० p 84

181 स्मृतिच० III p 100, परा मा III p 74, वीर० p 85

182 स्मृतिच० III p 101 परा मा III p 74

183 स्मृतिच० III p. 101, परा मा p 74

184 स्मृतिच० III p 101 परा मा p 74 (which reads किंचिद्गृहीत), म नि p 94 (which reads अगृहीत न दास्यति)

किं तेनैव सदा देयं मया देयं भवेदिति ।
एतदाकुलमित्युक्तमुत्तरं तद्विदो विदुः ॥ १८५ ॥
काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम् ।
असारमिति तत्त्वेन सम्यङ्नोत्तरमिष्यते ॥ १८६ ॥
प्रस्तुतादल्पमव्यक्तं न्यूनाधिकमसङ्गतम् ।
अव्याप्यसारं संदिग्धं प्रतिपक्षं न लङ्घयेत् ॥ १८७ ॥
संदिग्धमन्यत्प्रकृतादल्पस्वमतिभूरि च ।
पक्षैकदेशव्याप्येव तत्तु नैवोत्तरं भवेत् ॥ १८८ ॥
पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरम् ॥१८९॥
न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ १९० ॥

( वादहानिकराणि )

शपथं कारणं पूर्वमन्यद्गुरुतरं यदि ।
प्रतिवाक्यगतं ब्रूयात्साध्यते तद्धि नेतरत् ॥ १९१ ॥
यथार्थमुत्तरं दद्याद्यच्छन्तं च दापयेत् ।
सामभेदादिभिर्मार्गैर्यावत्सोऽर्थं समुत्थित ॥ १९२ ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं चापि तद्ग्राह्यमुभयोरपि ॥ १९३ ॥

---

185 स्मृतिच॰ III p 101, परा मा III p 75
186 स्मृतिच॰ III p 101, परा मा III p 75, वीर॰ p 84 ( which reads वचेन सम नोत्तरमिष्यते )
187 व्य मा p 303
188 अपरार्क p 614, व्य मा p 303, मिता॰ ( on या II 7 ) cites as स्मृत्यन्तर
189 मिता॰ (on या II 7) अपरार्क 613, व्य मा p 303 स्मृतिच॰ III p 101, वीर॰ p 85, परा मा III p 77
190 व्य मा p 297, मिता॰ ( on या II 7 ), अपरार्क p 613, वीर॰ p 85, परा मा III p 77, स्मृतिच॰ III p 102
191 अपरार्क p 614 व्य मा p. 307, स्मृतिच॰ III p. 110 व्य. मा. reads प्रतिवाक्ये गतिं
192 अपरार्क p 615, वीर॰ p 74 ( has only first half ).
193 अपरार्क p 615, स्मृतिच॰ III p 91, वीर॰ p 74.

यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ १७५ ॥
चिह्नाकारसहस्रं तु समयं चाविजानता ।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम् ॥ १७६ ॥
प्रतिदत्तं मया वाच्ये प्रतिदत्तं मया नहि ।
यदेवमाह विज्ञेयं विरुद्धं तदिहोत्तरम् ॥ १७७ ॥
जितः पुरा मयायं च त्वयैस्मिन्निति भाषितुम् ।
पुरा मयायमिति यत्तदूनं चोत्तरं स्मृतम् ॥ १७८ ॥
गृहीतमिति वाच्ये तु कार्यं तेन कृतं मया ।
पुरा गृहीतं यद्द्रव्यमिति यच्चातिभूरि तत् ॥ १७९ ॥
देयं मयेति वक्तव्ये मयादेयमितीदृशम् ।
संदिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैस्तदा ॥ १८० ॥
बलात्पलेन चैतेन साहसं स्थापितं पुरा ।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥१८१॥
अस्मै दत्तं मया सार्धं सहस्रमिति भाषिते ।
प्रतिदत्तं तदर्धं यत्तदिहाव्यापकं स्मृतम् ॥ १८२ ॥
पूर्वपादी क्रियां यावत्सम्यङ्नैव निवेशयेत् ।
मया गृहीतं पूर्वं नो तद्व्यस्तपदमुच्यते ॥ १८३ ॥
शल्कि तामरसं कश्चिद्गृहीत प्रदास्यति ।
निगूढार्थं तु तत्प्रोक्तमुत्तरं व्यवहारतः ॥ १८४ ॥

---

175 अपरार्क p 614, परा मा III p 73, व्य मा p 303, वीर० p 84 मिता० ( on या II 7 ) cites as स्मृत्यन्तर
176 177 स्मृतिच० III p 99, परा मा III p 73, वीर० p 84
178 स्मृतिच० III p 99 परा मा III p 74 वीर० p 84 परा मा reads भाषित and वीर० reads विवक्षिते
179 स्मृतिच० III p 100 परा मा III p 74, वीर० p 84 परा मा reads हीनं चेद्युक्ति
180 स्मृतिच० III p 100, परा मा III p 74, वीर० p 84
181 स्मृतिच० III p 100, परा मा III p 74, वीर० p 85
182 स्मृतिच० III p 101 परा मा III p 74
183 स्मृतिच० III p. 101 परा मा p 74
184 स्मृतिच० III p 101 परा मा p 74 (which reads किंचिद्गृहीत), वी मि p. 84 (which reads अगृहीत न दास्यति)

किं तेनैव सदा देयं मया देयं भवेदिति।
यत्तदाकुलमित्युक्तमुत्तरं तद्विदो विदुः ॥ १८५ ॥
काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम्।
असारमिति तत्त्वेन सम्यग्नोत्तरमिष्यते ॥ १८६ ॥
प्रस्तुतादल्पमव्यक्तं न्यूनाधिकमसङ्गतम्।
अव्याप्यसारं संदिग्धं प्रतिपक्षं न लङ्घयेत् ॥ १८७ ॥
संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च।
पक्षैकदेशव्याप्येव तत्तु नैवोत्तरं भवेत् ॥ १८८ ॥
पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्।
मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरम् ॥१८९॥
न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ १९० ॥

( वादहानिकराणि )

प्रपद्य कारणं पूर्वमन्यदुत्तरं यदि।
प्रतिवाक्यगतं ब्रूयात्साध्यते तद्धि नेतरत् ॥ १९१ ॥
यथार्थमुत्तरं दद्याद्यच्छन्तं च दापयेत्।
सामभेदादिभिर्मार्गैर्यावत्सोर्थः समुत्थितः ॥ १९२ ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना।
उत्तरान्तर्गतं चापि तद्ग्राह्यमुभयोरपि ॥ १९३ ॥

---

185 स्मृतिच॰ III p. 101, परा. मा III p 75
186 स्मृतिच॰ III p. 102, परा. मा III p. 75, वीर॰ p. 84 ( which reads तत्त्वेन सम्यं नोत्तरमिष्यते ).
187 व्य. मा. p 303.
188 अपरार्क p. 614, व्य. मा p 303, मिता॰ ( on या II. 7 ) cites as स्मृत्यन्तर.
189 मिता॰ (on या. II. 7), अपरार्क. 613, व्य मा. p. 303, स्मृतिच॰ III p. 101, वीर॰ p. 85, परा. मा. III. p 77
190 व्य. मा. p. 297, मिता॰ ( on या II 7 ), अपरार्क p. 613, वीर॰ p. 85, परा. मा. III p. 77, स्मृतिच॰ III p. 102.
191 अपरार्क p. 614, व्य. मा p 307, स्मृतिच॰ III p 110, व्य. मा. reads प्रतिवाक्ये गतिं.
192 अपरार्क p. 615, वीर॰ p. 74 ( has only first half ).
193 अपरार्क p. 615, स्मृतिच॰ III p. 91, वीर॰ p. 74.

उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोसौ दातुमर्हति ॥ १९४ ॥
धावयित्वा यथाकार्यं त्यजेदन्यद्ववेदसौ ।
अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥ १९५ ॥
न मयाभिहितं कार्यमभियुज्य परं वदेत् ।
विप्लुषश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥ १९६ ॥
लेखयित्वा तु यो वाक्यं हीनं वाप्यधिकं पुन ।
वदेद्वादी स हीयेत नाभियोगं तु सोर्हति ॥ १९७ ॥
सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः ।
तां क्रियां द्वेष्टि यो मोहात्क्रियाद्वेषी स उच्यते ॥१९८॥
आह्वानादनुपस्थानात्सद्य एव प्रहीयते ॥१९९॥
वृहीत्युक्तोपि न ब्रूयात्सद्यो बन्धनमर्हति ।
द्वितीयेहनि दुर्वेद्वेर्विद्यात्तस्य पराजयम् ॥ २०० ॥
व्याजेनैव तु यत्रासौ दीर्घकालमभीप्सति ।
सापदेशं तु तद् विद्याद्वादहानिकरं स्मृतम् ॥ २०१ ॥
अन्यवादी पणान्पञ्च क्रियाद्वेषी पणान्दश ।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तर ।
आहूतप्रपलायी च पणान्प्राहास्तु विंशतिम् ॥२०२॥

---

194 परा. मा III p 81, स्मृतिच॰ III p 105

195 अपरार्क p 622, स्मृतिच॰ III p 106, वीर॰ p 98, स वि p 102.

106 अपरार्क p 622, स्मृतिच III. p 106 वीर॰ p 98, स वि p 102

197 अपरार्क p 622, स्मृतिच॰ III p. 106, परा. मा III p 81, वीर॰ p 98, स वि p 102

198 स्मृतिच॰ III p 106, परा मा III p 82, वीर॰ p 98, स वि p 102

199 परा. मा III p 82, वीर॰ p 98 स्मृतिच॰ III p 107, स. वि p 102

200 स्मृतिच॰ III p 107, परा मा III 82 वीर p 98 ( reads सद्यस्त-दनमर्हति ), स वि. p 102

201 अपरार्क p 622 स्मृतिच॰ III p 107, वीर॰ p 98 ( reads--कालमति क्रमेत् )

202 स्मृतिच॰ III p 107, परा मा III p 83 वीर॰ p 99, स वि 103 स्मृतिच॰ reads आहूतविपलायी and स वि reads आहूतव्यपवादी (!)

त्रिराहूतमनायान्तमाहूतप्रपलायिनम् ।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः ॥ २०३ ॥
श्रावितव्यवहाराणामेकं यत्र प्रभेदयेत् ।
वादिनं लोभयेच्चैव हीनं तमिति निर्दिशेत् ॥ २०४ ॥
भयं करोति भेदं वा भीषणं वा निरोधनम् ।
एतानि वादिनोऽर्थस्य व्यवहारे स हीयते ॥ २०५ ॥
दोषानुरूपं संग्राह्य पुनर्वादो न विद्यते ।
उभयोर्लिखिते वाच्ये प्रारब्धे कार्यनिश्चये ।
अयुक्तं तत्र यो ब्रूयात्तस्मादर्थात्स हीयते ॥ २०६ ॥
साक्षिणो यस्तु निर्दिश्य कामतो न विवादयेत् ।
स वादी हीयते तस्मात् त्रिंशद्रात्रात्परेण तु ॥ २०७ ॥
पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥ २०८॥
यो हीनवाक्येन जितस्तस्योद्धारं विदुर्बुधाः ।
स्ववाक्यहीनो यस्तु स्यात्तस्योद्धारो न विद्यते ॥२०९॥
आवेद्य प्रगृहीतार्थाः प्रशमं यान्ति ये मिथः
सर्वे द्विगुणदण्ड्याः स्युः विप्रलम्भान्नृपस्य ते ॥२१०॥

---

203 स्मृतिच॰ III p 103 परा मा p 83, वीर॰ p 99

204 स्मृतिच॰ III p 108, वीर॰ p 99 (reads तमपि for तमिति), स वि p 103 ( reads तमपि )

205 स वि p 103

206 अपरार्क p 615 (reads अयुक्त for अयुक्तं) परा मा III pp 83 84, वीर॰ p 74 स्मृतिच॰ III p 109 परा मा and स्मृतिच॰ read वाक्ये for वाच्ये

207 अपरार्क p 622, स्मृतिच॰ III p 110

208 व्य मा p 310, वीर॰ p 103 स्मृतिच॰ III p 111 व्य मा ascribes it to बृहस्पति

209 स्मृतिच॰ III p 111 वीर॰ p 103 (reads हीनविहेन)

210 स्मृतिच॰ III p 112 परा मा III p 84 वीर॰ p 104 परा मा and वीर॰ read प्रगृहातार्थं

( क्रियापादः )

कारणात्पूर्वपक्षोपि ह्युत्तरत्वं प्रपद्यते ।
अतः क्रिया तदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥ २११ ॥
शोधिते लिखिते सम्यगेवं निर्दोष उत्तरे ।
प्रत्यर्थिनोर्थिनो चापि क्रियाकरणमिष्यते ॥ २१२ ॥
वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।
तत्साध्यं साधनं येन तत्साध्यं साध्यतेखिलम् ॥२१३॥

( प्रमाणानि, तेषां च बलाबलादिविचारः )

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं विदुः ।
लेख्योद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः ॥ २१४ ॥
पूर्ववादेप्यि लिखिते यथाक्षरमशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥ २१५ ॥
कार्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते ।
द्विभेदा सा पुनर्ज्ञेया दैविकी मानुषी तथा ।
मानुषी लेख्यसाक्ष्यादिर्घटादिर्दैविकी मता ॥ २१६ ॥
संभवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत्क्रियाम् ।
संभवे तु प्रयुञ्जानो दैविकीं हीयते ततः ॥ २१७ ॥
यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥२१८॥

---

211 अपरार्क p. 624, परा. मा. III p. 87, वीर॰ p. 79.

212 स्मृतिच॰ III p 118, वीर॰ p. 02, स. वि. p. 105 ( reads क्रिया कारणमिष्यते )

213 व्य. मा. p. 334, वीर॰ p. 107.

214 वीर॰ p 110, परा. मा. III. p. 91 ( reads साक्षिणो लिखितं भुक्तिः and लिख्योद्देशस्तु युक्तिः ).

215 वीर॰ p 111.

216 अपरार्क p 616.

217 स्मृतिच III p 116

218 मिता ( on या. II 22 ), व्य. मा. p 315, अपरार्क p. 628, स्मृतिच॰ III. p. 116, परा. मा III 87, वीर॰ p. 111.

यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥२१९॥
पञ्चप्रकारं दैवं स्यान्मानुषं त्रिविधं स्मृतम् ॥ २२० ॥
क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥२२१॥
सारभूतं पदं मुक्त्वा असाराणि बहून्यपि ।
संसाधयेत्क्रिया या तु तां जह्यात्सारवर्जिताम् ॥
पक्षद्वयं साधयेद्या तां जह्याद्दूरतः क्रियाम् ॥ २२२ ॥
क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न दिव्यं न च साक्षिणः ॥२२३॥
कालेन हीयते लेख्यं दूषितं न्यायतस्तथा ।
अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥ २२४ ॥
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥२२५॥
द्वारमार्गक्रियाभोगजलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥२२६॥
दत्तादत्तेऽथभृत्यानां स्वामिना निर्णये सति ।
विक्रयादानसंबन्धे क्रीत्वा धनमयच्छति ॥ २२७ ॥

---

219 मिता (on या II 22), व्य मा p 311, स्मृतिच. III p 116, परा मा III p 88, वीर॰ p. 111, अपरार्क reads प्राप्तापि for व्याप्तापि and न्याय्या for ग्राह्या व्य मा and वीर॰ also read प्राप्तापि

220 स्मृतिच॰ III p 124

221 मिता॰ (on या II. 80), व्य मा pp 281, 309, 336, वीर॰ p. 108

222 स्मृतिच॰ III p 116 (has first two lines), वीर॰ p 108

223 व्य मा pp 306, 308, 315, अपरार्क p 690 (which reads देया for प्रोक्ता), परा मा III p 88 (which reads क्रिया तु....प्राप्ता).

224 व्य मा p 340 (first line), स्मृतिच॰ III. p 149 (has only the half अलेख्य॰) वीर॰ p 113 114 (has last two lines)

225-228 स्मृतिच॰ III p 122, मिता॰ (on या II 22 without name), परा मा III pp 88-89, अपरार्क p 629, वीर॰ p 112

द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥२२८॥
प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव वा ॥ २२९ ॥
गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
युक्तिचिह्नेङ्गिताकारवाक्यशुद्ध्यैर्द्विधैतैर्नृणाम् ॥ २३० ॥
उत्तमेषु च सर्वेषु साहसेषु विचारयेत् ।
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै भृगु ॥ २३१ ॥
समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ।
दिव्यमालम्ब्यते वादी न पृच्छेत्तत्र साक्षिणः ॥ २३२ ॥
ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥२३३॥
चोदना प्रतिकालं च युक्तिलेशास्तथैव च ।
तृतीयः शपथः प्रोक्तः तैर्ऋणं साधयेत्क्रमात् ॥ २३४ ॥
अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ॥
त्रिः चतुः पञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥ २३५ ॥
चोदनाप्रतिघाते तु युक्तिलेशैः समन्वियात् ।
देशकालार्थसंबन्ध परिमाण क्रियादिभिः ॥ २३६ ॥

---

मिता॰ reads न दिव्यं for न लेख्यं and जलद हादिषुकिया, परा मा reads स्वामिनः for स्वामिना, अपरार्क reads दत्तादत्त तथादत्ते वीर॰ reads दत्तादत्तेषु and स्वामिनो and वाह्यादिषु क्रिया

229 अपरार्क p 629, स्मृतिच॰ III p 117 ( which reads बलोद्भवषु ), मिता॰ on या II 22 ( दिव्यमेव च ) परा मा III p 91, व्य वि p 107 ( reads बलोद्भवेषु )

230 स्मृतिच॰ III p 117, वीर॰ p 113 (युक्तिचिह्नेङ्गिता॰)

231 स्मृतिच॰ III p 117, परा मा III p 90 ( reads सर्वे तु दिव्य॰ )

232 व्य. मा p. 310 अपरार्क p 630, स्मृतिच॰ III p 121, परा मा III p 90, वीर॰ p 114 व्य मा reads तत्र विशोधयेत् and दिव्यमाल म्बन स्मृतिच॰ reads प्राणान्तकविवादे वा.

233 स्मृतिच॰ III p 118, परा मा III p 91 ( reads युक्तिलेश्यादयोऽपि वा ) व्य वि p 107

234 237 परा मा III p 91 (reads युक्तिलेशस्तथैव and युक्तिलेशैः , सार्थेर

युक्तिष्वप्यसमर्थासु शपथैरेव निर्णयेत् ।
अर्थकालबलापेक्षैरग्न्यम्बुसुकृतादिभिः ॥ २३७ ॥

यत्र स्यात्सोपधं लेख्यं तद्राज्ञः श्रावितं यदि ।
दिव्येन शोधयेत्तत्र राजा धर्मासनस्थितः ॥ २३८ ॥

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ॥ २३९॥

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।
साक्षिभिर्लिखितनार्थे(र्थं) भुक्त्या चैव प्रसाधयेत् ॥ २४० ॥

प्रमाणैर्हेतुना वापि दिव्येनैव तु निश्चयम् ।
सर्वेष्वेव विवादेषु सदा कुर्यान्नराधिपः ॥ २४१ ॥

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुं तर्कं चैव मनीषिणः ॥ २४२ ॥

पूर्वाभावे परेणैव नान्यथैव कदाचन ।
प्रमाणैर्वादिनिर्दिष्टैर्भुक्त्या लिखितसाक्षिभि ॥ २४३ ॥

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥ २४४ ॥

मिथ्योक्तौ स चतुष्पात्स्यात्प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये स च विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥२४५॥

---

न मर्दयेत्, बलापेक्षं). स्मृतिच० (III pp. 117-118) appears to attribute these four to नारद.

238 अपरार्क p 630, स्मृतिच० III p. 122, वीर० p 115 ( reads राज्ञे ) परा. मा. III p. 90 ( यत्राजश्रावितं )

239 अपरार्क p. 629, स्मृतिच० III p. 121.

240 व्य. मा. p. 308.

241 अपरार्क p 628, स्मृतिच० III p 118, व्य. मा. p 314, स. वि. p. 107 ( reads सर्वेष्वर्थविवादेषु )

242 स वि p. 107, वीर० p 115 ( ascribes it to व्यास )

243 व्य. मा. p. 314, स्मृतिच० III p. 118 ( first half ), अपरार्क p 628 ( first half ). स्मृतिच० reads सर्वाभावे तु यत्नेन and अपरार्क reads तु यत्नेन for परेणैव.

244 परा. मा. III p. 152, वीर० p. 115.

245 स्मृतिच० III p. 120, स. वि. p. 108.

पराजयश्च द्विविधः परोक्तः स्वोक्त एव च ।
परोक्तः स्याद्दशविध स्वोक्त एकविधः स्मृतः ॥२४६॥
विवादान्तरसंक्रान्तिः पूर्वोत्तरविरुद्धता ।
दूषणं स्वक्रियोत्पत्तेः परवाक्योपपादनम् ॥ २४७ ॥
अनिर्देशश्च देशस्य निर्देशोद्देशकालयोः ।
साक्षिणामुपजापश्च विद्वेषो वचनस्य च ॥
अयुक्तदेशोपनय साक्षिप्रश्ननिराक्रिया ॥ २४८ ॥

( लेख्यम् )

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ २४९ ॥
प्रायेण स्वहस्तेन लिखितं साक्षिवर्जितम् ।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः ॥ २५० ॥
उत्पत्तिजातिसंज्ञां च धनसंख्यां च लेखयेत् ।
स्मरतेयं प्रयुक्तस्य नश्येदर्थस्त्वलेखितः ॥ २५१ ॥
लेख्यं तु साक्षिमत्कार्यमविलुप्ताक्षरक्रमम् ।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु ॥ २५२ ॥
वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥२५३॥
चातुर्विद्यपुरश्रेणीगणपौरादिकस्थितिः ।
सिद्ध्यर्थं तु यल्लेख्यं तद्व्यवस्थापत्रकम् ॥ २५४ ॥
अभियोगे पराजिते प्रायश्चित्ते कृते जने ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥ २५५ ॥

246-248 स्मृ. च. II p. 254-255

249 परा मा III p. 130. This is नारद ( उपोद्घात verse 135 ). वीर० p. 150 and मिता० on या II, 84 ascribe it to नारद. अपरार्क p. 686 cites the verse without naming the author.

250 स्मृतिच० III p. 136 परा. मा. III p. 127.

251-53 [illegible]

254 स्मृतिच० III p. 135 This is ascribed to पितामह by परा. मा. III p. 128

255 स्मृ च p. 25, वीर० p. 18[illegible] This is ascribed to पितामह by परा. मा. p. 128 and [illegible] p. 116.

उत्तमेषु समस्तेषु अभिशाप समागते ।
वृत्तानुवादलेख्य यत्तज्ज्ञेय सन्धिपत्रकम् ॥ २५६ ॥
सीमाविवादे निर्णीते सीमापत्र विधीयते ॥ २५७ ॥
राज्ञ स्वहस्तसयुक्त समुद्राचिह्नित तथा ।
राजकीय स्मृत लेख्य सर्वेष्वर्थेषु साक्षिमत् ॥ २५८ ॥
अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक्तथा ।
निर्णयश्च यथा तस्य यथा चावधृत स्वयम् ॥२५९॥
एतद्यथाक्षर लेख्ये यथापूर्वं निवेशयेत् ।
अभियोक्त्रभियुक्ताना वचन प्राड्निवेशयेत् ॥ २६० ॥
सभ्याना प्राड्विवाकस्य कुल्याना वा तत परम् ।
निश्चय स्मृतिशास्त्रस्य मत तत्रैव लेखयेत् ॥ २६१ ॥
सिद्धेनार्थेन सयोज्यो वादी सत्कारपूर्वकम् ।
लेख्य स्वहस्तसयुक्त तस्मै दद्यात्तु पार्थिव ॥ २६२ ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविद स्थिता ।
यथालेख्यविधौ तद्वत् स्वहस्त तत्र दापयेत् ॥२६३ ॥
अनेन विधिना लेख्य पश्चात्कार विदुर्बुधा ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवत्तत्र न सर्वासु विधीयते ॥ २६४ ॥

---

256 व्य म p 25 वीर० p 189

257 स्मृतिच० III p 137, परा III p 128 व्य म 25, वीर p 190

258 टोडरान द

259 स्मृतिच० III p 130 व्यवहारतत्त्व p 230 व्य मा p 309 ( which reads यथाचारकृत ) while व्य म p 353 has the same verse and reads प्रतिज्ञावचन तथा and तथा चावधृत

260 स्मृतिच० III p 130 व्य म p 309 (first half) reads लेख्य for लख्ये व्य मा p 353 has first half and reads तद्यथाक्षर

261 स्मृतिच० III p 130

262 अपरार्क p 684 ( reads सिद्ध च येन ) स्मृतिच० III 130 p वीर० p 195

263 स्मृतिच० III 130 व्य मा p 309 and p 353 वीर० p 195 ( which reads स्वहस्त दापयेत )

264 स्मृतिच० III p 131, परा मा p 124 125 वीर० p 195

अन्यथाधादिहीनेभ्य इतरेषां प्रदीयते ।
धृतानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् ॥ २६५ ॥

( लेख्यपरीक्षा )

राजाज्ञया समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिण ॥२६६॥
वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।
अहीनकमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥ २६७ ॥
देशाचारयुतं वर्षमासपक्षादिवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥ २६८ ॥
स्थानभ्रष्टास्त्वपङ्क्तिस्था संदिग्धा लक्षणच्युता ।
यदा तु संस्थिता वर्णाः कूटलेख्यं तदा भवेत् ॥ २६९ ॥
देशाचारविरुद्धं यत्संदिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साक्ष्यहीनं च दुष्यति ॥ २७० ॥
मत्तेनोपाधिभीतेन तथोन्मत्तेन पीडितैः ।
स्त्रीभिर्बालास्वतन्त्रैश्च कृतं लेख्यं न सिध्यति ॥२७१॥
ख्यापितं चेद् द्वितीयेह्नि न कश्चिद्विनिवर्तयेत् ।
तथा तत्स्यात्प्रमाणं तु मत्तोन्मत्तकृताद्दते ॥ २७२ ॥

---

265 स्मृतिच॰ III p 131, परा मा III 125, वीर॰ p 195, टोडरानन्द. परा मा. reads विधायते for प्रदायते and वृद्धानुवादसंसिद्धि .

266 स्मृतिच॰ III p 139 (reads क्रियां समाहूय) and also p 195, परा मा III p 129, वीर॰ p 197 (reads राजा क्रिया ), स वि. p 119 ( also reads क्रियां समाहूय and suggests that समादाय would be good a reading)

267 स्मृतिच॰ III p 139, परा मा III p 129, स वि p 119.

268 स्मृतिच॰ III p 140

269 स्मृतिच॰ III p 141, परा मा III 130 (which reads अकान्तिस्था )

270 अपरार्क p 686, स्मृतिच॰ III p 141 ( reads कृतं च स्वामिना ), परा मा III p. 131, वीर॰ p 197,

271 स्मृतिच॰ p 141 ( मत्तेनोपाधि॰ ) स वि p 119.

272 टोडरानन्द

साक्षिदोषाद्भवेद्दुष्टं पत्रं व लेखकस्य वा ।
धनिकस्योपधादोषात्तथा धारणिकस्य वा ॥ २७३ ॥
दुष्टेदुष्टं भवेल्लेख्यं शुद्धं शुद्धेर्विनिर्दिशेत् ।
तत्पत्रमुपधादुष्टं साक्षिलेखककारकैः ॥ २७४ ॥
प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥ २७५॥
साक्षिलेखककर्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रयोक्तव्या दुष्टेर्लेख्यं प्रदुष्यति ॥ २७६ ॥
न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥ २७७ ॥
नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाच्चापि हीयते ॥२७८॥
एवं दुष्टं नृपस्थाने यस्मिंस्तद्धि विचार्यते ।
विमृश्य ब्राह्मणैः सार्धं पत्रदोषान्निरूपयेत् ॥ २७९ ॥
येन ते कूटतां यान्ति साक्षिलेखककारकाः ।
तेन दुष्टं भवेल्लेख्यं शुद्धैः शुद्धिं विनिर्दिशेत् ॥ २८० ॥

---

273 व्य मा p 338 अपरार्क p 686 परा मा III p 131 स्मृतिच॰ III p .142 (धनिकस्यापि वा), दंडरानद (reads धनिकस्योपधालेख्य), वीर॰ p 197.

274 व्य मा p 338, वीर॰ p 197

275 स्मृतिच॰ III p 142 and p 192, परा. मा. III p 132, अपरार्क 671 व्य म p. 39, वीर॰ p 164

276 स्मृतिच॰ III p 142 परा मा III p 132 वीर॰ p 199

277 अपरार्क p 689, स्मृतिच॰ III p 143 परा मा III p 132, वीर॰ p 198

278 स्मृतिच॰ III p 143, परा मा III p 132 (reads तथ्येन हि प्रमाणं तु)

279 स्मृतिच॰ III p 143, अपरार्क p 689, परा मा III p 132 133 (attributes to बृहस्पति)

280 स्मृतिच॰ III p 143 परा मा III p 133

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्ता ऋणं होति विभावयेत् ॥ २८१ ॥
दत्तं लेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते ।
पत्रस्थैः साक्षिभिर्वाच्यो लेखकस्य मतेन वा ॥ २८२ ॥
कृताकृतविवादेषु साक्षिभिः पत्रनिर्णयः ।
दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत् ॥ २८३ ॥
त्रिविधस्यापि लेख्यस्य भ्रान्तिः सञ्जायते नृणाम् ।
ऋणिसाक्षिलेखकानां हस्तोक्त्या साधयेत्ततः ॥ २८४ ॥
अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुध्येत्तु न संशयः ॥ २८५ ॥
ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥ २८६ ॥
समुद्रेपि यदा लेख्ये मृता सर्वेपि ते स्थिताः ।
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु च ॥ २८७ ॥
प्रत्यक्षमनुमानेन न कदाचिद्विप्रसाध्यते ।
तस्माद्दृश्यस्य दुष्टस्य वचोभिः साक्षिणां भवेत् ॥ २८८

---

281 अपरार्क p. 686, स्मृतिच॰ III p 143, वीर॰ p 197.

282 स्मृतिच॰ III p 144, परा. मा. III p. 133 ( ascribes to बृहस्पति and reads साक्षिभिर्वाचा ).

283 मिता॰ on या॰ II. 92 ( latter half ), अपरार्क p. 689 ( first half ), स्मृतिच॰ III p. 144, स वि p 120 (latter half only).

284 वीर॰ p 198, व्य. मा. p. 339 (ascribes to नारद and reads हस्तोक्त्ये), परा. मा p 134 ( ascribes to बृहस्पति )

निर्णय स्वधनार्थं हि पत्र दूषयति स्वयम् ।
लिखित लिखितेनैव साधिम साक्षिभिर्हरेत् ॥ २८९ ॥
कूटोक्तौ साक्षिणा वान्यालेख्यस्य च पत्रकम ।
नयेच्छुद्धि न च कूट स दाप्यो दमम‌ुत्तमम् ॥ २९० ॥
आढ्यस्य निकटस्थस्य यच्छकेन न याचितम् ।
शुद्धर्णशङ्कया तत्तु लेख्य दुर्बलतामियात् ॥ २९१ ॥
लेख्य चिरतरसमातीतमदृणाश्रावित च यत् ।
न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु । २९२॥
प्रयुक्ते शान्तलाभे तु लिखित यो न दर्शयेत् ।
नैव याचेत ऋणिक न तत्सिद्धिमवाप्नुयात् ॥ २९३ ॥
पश्चात्कारनिबद्ध यत्तद्यत्नेन विचारयेत् ।
यदि स्याद्युक्तियुक्त तु प्रमाण लिखित तदा ॥ २९४ ॥
अन्यथा दूरत कार्य पुनरेव विनिर्णयेत् ।
अतथ्य तथ्यभावेन स्थापित ज्ञानविभ्रमात् ॥
निपर्त्य तत्प्रमाण स्याद्यत्नेनापि कृत नृपे ॥ २९५ ॥
मुद्राशुद्ध क्रियाशुद्ध भुक्तिशुद्ध सचिह्नकम् ।
राज्ञ स्वहस्तसशुद्ध शुद्धिमायाति शासनम् ॥ २९६ ॥
निर्दोष प्रथित यत्तु लेख्य तत्सिद्धिमाप्नुयात् ॥ २९७ ॥
दृष्टे पत्रे स्फुटान् दोपान्नोक्तवानृणिको यदि ।

---

289 अपरार्क p 689 स्मृतिच॰ III 145, परा मा III p 134 (only latter half) अपरार्क has on p 690 the latter half joined to साक्षिभ्यो लिखित श्रेयो लिखितान्न तु साक्षिण (but no author is named) while स्मृतिच॰ ascribes latter half to नारद

290 अपरार्क p 689 वीर॰ p 199 परा मा III p 134 (only first half) and p 138 (where we have whole verse and वाक्य for वाक्यात्)

291 93 परा मा III pp 134 135 अपरार्क 692 (attributes to बृहस्पति) व्य मा p 340 (has 291 292 and ascribes to बृहस्पति) and p 294 (has 291) स्मृतिच॰ III p 152 (ascribes 291 to बृहस्पति and 292 293 to कात्यायन) reads तत्सद्धिमवाप्नुयात्

294 95 स्मृतिच॰ III p 145-6

296 अपरार्क p 684 स्मृतिच॰ III p 146, स वि p 121

297 परा मा III p 136

ततो विंशतिवर्षाणि स्थितं पत्रं स्थिरं भवेत् ॥ २९८ ॥
शाकस्य संनिधावर्थो येन लेख्येन भुज्यते ।
वर्षाणि विंशति यावत्तत्पत्रं दोषवर्जितम् ॥ २९९ ॥
अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितम् ।
तेन लेख्येन तत्सिध्दिर्लेख्यदोषविवर्जिता ॥ ३०० ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषा प्रवक्तव्या यावद्वर्षाणि विंशति ॥ ३०१ ॥
आधानसहित यत्र ऋणं लेख्ये निवेशितम् ।
मृतसाक्षि प्रमाण तु स्वल्पभोगेषु तद्विदु ॥३०२ ॥
प्राप्तं धनेन चेत्किञ्चिद्दानं चाप्यनिरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥ ३०३ ॥
यदि लब्धं भवेत्किञ्चित् प्रशस्तिर्वा कृता भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिण ॥ ३०४ ॥

---

298 व्य मा p 340 ( reads कन्तपत्र ), परा मा III p 136 ( reads तथा दृष्ट स्फुट दोष and ज्ञातपत्र स्थित) वीर॰ p 200

299 मिता॰ on या II 24 ( reads विंशतिवर्षाण्यतिक्रान्त ), अपरार्क p 690, व्य मा p 340 ( reads वर्षो for अर्थो ) स्मृतिच॰ III p 146 ( reads येन लेख्येन ) and 154 ( reads दश वर्षाण्यतिक्रात ), परा. मा III p 136, वीर॰ p 200 and स. वि 127 (read विंशद्वर्षाण्यतिक्रान्त )

300 मिता॰ on या II 24, स्मृतिच॰ III p 146 ( ascribes to स्मृत्यन्तर immedately after citing कात्यायन) अपरार्क p 691 (reads तत्सिद्ध लेख्य दोषविवर्जितम्), परा मा III p 136 (reads as अपरार्क does), स वि p 121 ( ascribes to स्मृत्यन्तर after citing कात्यायन and reads like अपरार्क ), वीर॰ p 200, स वि p 128

301 मिता॰ on या II 24 अपरार्क p 691, परा मा III p 136. वीर॰ p 200 स्मृतिच॰ III p 146 and स वि p 121 attribute to स्मृत्यन्तर while स वि p 128 attributes this and the preceding to कात्यायन

302 अपरार्क p 691, परा मा III p 136 (reads मृत साक्षिप्रमाण)

303 परा मा III p 137, वीर॰ p 200 ( reads देय चाप निरूपितम्)

304 अपरार्क p 691, परा मा III p 137, स वि p 122 अपरार्क attributes to नारद

दर्शित प्रतिकाल यद् श्राद्धित स्मारित तथा ।
लेख्य सिध्यति सर्वत्र मृतेष्वपि च साक्षिषु ॥ ३०५ ॥
न दिव्यै साक्षिभिर्वापि हीयते लिपित क्वचित् ।
लेख्यधर्म सदा श्रेष्ठो ह्यतो नान्येन हीयते ॥ ३०६ ॥
तद्युक्तप्रतिलेख्येन तद्विशिष्टेन वा सदा ।
लेख्यक्रिया निरस्येत निरस्यान्येन न क्वचित् ॥३०७॥
दर्पणस्थ यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशला जना ॥३०८॥
द्रव्य गृहीत्वा यल्लेख्य परस्मै सप्रदीयते ।
छद्मनान्येन चारूढ सयत चान्ययदमनि ॥ ३०९ ॥
दत्ते कृतेथवा द्रव्ये कचिल्लिखितपूर्वके ।
एष एव विधिर्ज्ञेयो लेख्यशुद्धिविनिर्णये ॥ ३१० ॥
स्थावरे विक्रयाधाने लेख्य कूट करोति य ।
स सम्यग्भावित कार्यो जिह्वापाण्यड्घ्रिवर्जित ॥३११॥
मलैर्येद्वेदित दग्ध छिद्रित भीतमेव वा ।
तदन्यत्कारयेल्लेख्य स्वेदेनोल्लिखित तथा ॥ ३१२ ॥

( भुक्ति )

लिखित साक्षिणो भुक्ति प्रमाणत्रयमिष्यते ।
प्रमाणेषु स्मृता भुक्ते सल्लेख्यसमता नृणाम् ॥ ३१३ ॥

---

305 स वि p 122

306 अपरार्क p 692 स्मृतिच॰ III p 151 व्य मा p 314 ( reads तद्दिव्यै and लेख्ये धर्म ), स वि p 123

307 अपरार्क p 692 (reads तद्युक्ते॰ and न साक्षिदापथै क्वचित्) स्मृतिच॰ III p 151 स वि p 123 (तद्युक्त प्रति॰) टोडरानन्द (reads like अपरार्क )

308 स्मृतिच॰ III p 148 व्य मा p 339 वीर॰ p 197

309–310 स्मृतिच॰ III p 152

311 परा मा III p 138 (reads असम्यग्भावित ) स्मृतिच॰ III p 150

312 अपरार्क p 687 स्मृतिच॰ III p 138

313 स्मृतिच॰ III p 153 स वि p 124 ( reads स्थिरा भुक्ति सल्लेख्या समता )

रथ्यानिर्गमनद्वारजलवाहादिसंशये ।
भुक्तिरेव तु गुर्वी स्यात्प्रमाणेष्विति निश्चयः ॥ ३१४ ॥
अनुमानाद् गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥ ३१५ ॥
नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥ ३१६ ॥
भुक्तिस्तु द्विविधा प्रोक्ता सागमानागमा तथा ।
त्रिपुरुषी या स्वतन्त्रा सा चेदन्या तु सागमा ॥३१७॥
मुख्या पैतामही भुक्तिः पैतृकी चापि संमता ।
त्रिभिरेतैरविच्छिन्ना स्थिरा पश्चाद्विकी मता ॥३१८॥
सागमेन तु भुक्तेन सम्यग्भुक्तं यदा तु यत् ।
आहर्ता लभते तत्तु नापहार्यं तु तत्कचित् ॥ ३१९ ॥
प्रनष्टागमलेख्येन भोगारूढेन वादिना ।
कालः प्रमाणं दानं च कीर्तनीयानि संसदि ॥ ३२० ॥
स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेनुगमाभावात् क्रमात्त्रिपुरुषागता ॥ ३२१ ॥

---

314 स्मृतिच॰ III. p. 153, परा. मा. III. p 146, स. वि. p. 124 (reads रथ्यादिनगरद्वार). परा. मा. reads रथ्यानिर्गमनद्वारे जलवाहादिसंश्रये.

315 व्य. मा. p. 318.

316 मिता॰ on या. II. 24, स्मृतिच॰ III p. 155, परा. मा. III. p. 147, स. वि. p. 126.

317 स्मृतिच॰ III. p. 167 ( which reads स्वतन्त्रानागमाख्या तु सागमा ) परा. मा. III p 141.

318 अपरार्क p. 636, वीर॰ p. 206, कृत्यकल्पतरु.

319 व्य. मा. p. 345 and टोडरानन्द, both ascribe to विष्णु and कात्यायन; compare विष्णुधर्मसूत्र V. 181.

320 स्मृतिच॰ III. p 162, परा. मा. III. p. 140, स. वि. p. 130.

321 मिता॰ on या. II. 27, अपरार्क p. 636 (ascribes to स्मृत्यन्तर), व्य.मा. p. 346 (अस्मार्तकालेनुगमात् भावात् !), परा. मा. III. p. 142 (first half ), स. वि. p. 133, स्मृतिच॰ III. p 163, वीर॰ p. 204 ( ascribes to नारद ).

आद्ये तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका संतता या त्रिपौरुषी ॥ ३२२ ॥
आहर्ता भुक्तियुक्तोपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥३२३॥
येनोपात्तं हि यद्द्रव्यं सोभियुक्तस्तदुद्धरेत् ।
चिरकालोपभोगेपि भुक्तिस्तस्यैव नेष्यते ॥ ३२४ ॥
चिरन्तनमविज्ञातं भोगं लोभान्न चालयेत् ॥ ३२५ ॥
पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
तस्मिन्प्रेते न वाच्योसौ भुक्त्या प्राप्तं हि तस्य तत् ॥३२६॥
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेपि तां तत्र चतुर्थः समवाप्नुयात् ॥३२७॥
यथा क्षीरं जनयति दधि कालाद्रसान्वितम् ।
दानहेतुस्तथा कालाद्भोगस्त्रिपुरुषागतः ॥ ३२८ ॥
भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी ।
विच्छिन्नापि तु सा ज्ञेया या तु पूर्वप्रसाधिता ॥३२९॥
न भोगं कल्पयेत्स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च मातृतः पितृतः क्रमात् ॥ ३३० ॥

---

322 अपरार्क p. 636, परा. मा. III p. 146, व्य. मा. p 344 and वीर॰ p. 206 ascribe to नारद. व्य. मा reads आद्ये तु All except अपरार्क read चिरन्तनी for त्रिपौरुषी.

323 स्मृतिच॰ III, p. 164, परा मा. III. p 145

324 व्य. मा. p. 343.

325 स्मृतिच॰ III, p 168

326 टोडरानन्द.

327 व्य. मा. p. 341 and टोडरानन्द ( both ascribe to विष्णु and कात्यायन ). Compare विष्णुधर्मसूत्र V. 187.

328 व्य. मा. p. 350.

329 कृत्यकल्पतरु, परा. मा. III. p. 145 ( ascribes it to बृहस्पति )

330 कृत्यकल्पतरु, व्य. मा. p. 351 ( reads श्रोत्रियवृद्धे च प्राप्तेपि पितृत ), टोडरानन्द ( प्राप्ते च पितृत. ), स्मृतिच॰ III. p. 168.

ब्रह्मचारी चरेत्कश्चिद्व्रतं षट्त्रिंशदाब्दिकम् ।
अर्थार्थी चान्यविषये दीर्घकालं वसेन्नरः ॥ ३३१ ॥
समावृत्तोऽव्रती कुर्यात्स्वधनान्वेषणं ततः ।
पञ्चाशदाब्दिको भोगस्तद्धनस्यापहारकः ॥ ३३२ ॥
प्रतिवेदं द्वादशाब्द कालो विद्यार्थिनां स्मृतः ।
शिल्पविद्यार्थिनां चैव ग्रहणान्तः प्रकीर्तितः ॥ ३३३ ॥
सुहृद्भिर्बन्धुभिश्चैषां यत्स्वं भुक्तमपश्यताम् ।
नृपापराधिनां चैव न तत्कालेन हीयते ॥ ३३४ ॥
सनाभिभिर्बान्धवैश्च यद्भुक्तं स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्यत्र कल्पयेत् ॥३३५॥

( युक्ति. )

अर्थिनाभ्यर्थितो यस्तु विघातं न प्रयोजयेत् ।
त्रिचतुःपञ्चकृत्वो वा परस्तद्धनी भवेत् ॥ ३३६ ॥
दानं प्रज्ञापना भेद संप्रलोभक्रिया च या ।
चित्तापनयनं चैव हेतवो हि विभावकाः ॥ ३३७ ॥
एषामन्यतमो यत्र वादिना भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद् भाविते वादिनिह्नवे ॥ ३३८॥

( साक्षिण )

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥ ३३९ ॥

---

331-32 परा मा. III, 148, स्मृतिच॰ III. p 168 ( ascribes to नारद ).

333 334 परा. मा. III p 148, स्मृतिच॰ III p. 159 (ascribes to नारद) reads यत्सम्भुक्तम्.

335 अपरार्क p. 637, व्य. मा p. 351 ( reads सनाभै and अन्येषु ), वीर॰ p. 221.

336 वीर॰ p 224

337-338 कृत्यकल्पतरु ( reads वादिनो and भावितेऽपि ), टोडरानन्द, वीर॰ pp 224-225

339 व्य. मा. pp. 306 ( reads कालग्रहणं ), 328, स. वि. p. 148 ( reads काले ), स्मृतिच॰ III. 214, टोडरानन्द.

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।
साक्षिभिर्भाषितं वाक्यं सभ्यैः सह परीक्षयेत् ॥३४०॥
सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणाम् ।
संदिग्धं यत्र साक्ष्यं स्यात्सद्यः स्पष्टं विवादयेत् ॥३४१॥
सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाको नियुञ्जीत विधिनानेन सान्त्वयन् ॥३४२॥
यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥ ३४३ ॥
देवब्राह्मणसांनिध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् ॥
आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान् विज्ञातार्थान्पृथक्पृथक् ॥३४५॥
अर्थिप्रत्यर्थिसांनिध्यादनुभूतं तु यद्भवेत् ।
तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥३४६॥
प्रख्यातकुलशीलाश्च लोभमोहविवर्जिता ।
आप्ताः शुद्धा विशिष्टा ये तेषां साक्ष्यमसंशयम् ॥३४७॥

---

340 वीर॰ p. 165 ( first half ), व्य. मा. p. 331, अपरार्क p. 675, मिता॰ on या. II 80 (latter half).

341 अपरार्क p 677 ( reads सद्यः पृष्टं ), स्मृतिच॰ III. p. 213, स. वि. p 148 ( reads यत्साक्ष्य तु स्पष्टं सद्यो ), टोडरानन्द ( reads स्पृष्ट ).

342 मिता. on या II. 73, वीर. p 167, अपरार्क p. 675 (no name), परा. मा. III. p. 107 (ascribes to मनु), व्य. म. ascribes this and the next two to मनु and कात्यायन.

343 वीर. p. 167, अपरार्क p. 675 (no name), परा मा. III. p. 108 (ascribes to मनु )

344 मिता. on या. II. 73, वीर. p. 167, अपरार्क p. 673 and परा मा. III p. 111 (both cite as मनु's).

345 मिता. on या. II. 73, अपरार्क p 674 (ascribes to नारद)

346 व्य. मा p. 317 (reads अन्यथा), टोडरानन्द, वीर. p. 142.

347 स्मृतिच. III. p. 174, वीर. p. 149 (reads आप्ताः शिष्टा and तेषां वाक्य॰).

विभाव्यो वादिना यादृक् सदृशैरेव भावयेत् ।
नोत्कृष्टश्चापकृष्टस्तु साक्षिभिर्भावयेत्सदा ॥ ३४८ ॥
लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥ ३४९ ॥
दासचारणमल्लानां हस्त्यश्वायुधजीविनाम् ।
प्रत्येकैकं समूहानां नायका वर्गिणस्तथा ॥
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिण ॥ ३५० ॥
स्त्रीणां साक्ष्यं स्त्रिय कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनय ॥ ३५१ ॥
अशक्य आगमो यत्र विदेशप्रतिवासिनाम् ।
त्रैविद्यप्रहितं तत्र लेख्यसाक्ष्यं प्रवादयेत् ॥ ३५२ ॥
अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोपि याच्यते ।
अर्थिना प्रहितः साक्षी भवत्येकोपि दूतक ॥ ३५३ ॥
संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तित ॥ ३५४ ॥
लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।
नृपे पश्यति यत्कार्यं साक्षिणः समुदाहृताः ॥ ३५५ ॥

---

348 वीर॰ p 149.

349-50 अपरार्क p 666, वीर॰ p 149, टोडरानन्द (reads मुनिः for भृगुः)

351 टोडरानन्द (ascribes to कात्यायन and मनु), व्य. मा. p 323 (to both मनु and कात्या.). This is मनु॰ 8 68.

352 अपरार्क p. 667 ( reads विदेशे प्रतिवादिनाम् ), टोडरानन्द

353 व्य. मा p. 319 ( अभ्यन्तरर्णनिक्षेपे and याचित. for दूतक. ), स्मृतिच॰ III p. 175, परा मा III. p. 96 ( first half ) reads आभ्यन्तरस्तु विशेषे and मा वदेत् for याच्यते, वीर॰ p 151 ( reads याचिते for दूतक ), व्यवहारतत्त्व p 214 reads एकोपि याचिते.

354 स्मृतिच॰ III, p 175 (reads संस्कृतं येन सन्यस्त), वीर p. 151, व्यवहारतत्त्व p. 214

355 व्य मा. pp. 320, 823, टोडरानन्द.

अन्ये पुनरनिर्दिष्टा साक्षिण समुदाहृता ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥३५६॥
कार्येष्वभ्यन्तरो यश्चार्थिना प्रहितश्च य ।
कुल्या कुलविवादेषु भवेयुस्तेपि साक्षिण ॥ ३५७ ॥
रिक्थभागविवादे तु संदेहे समुपस्थिते ।
कुल्याना वचन तत्र प्रमाण तद्विपर्यये ॥ ३५८ ॥
साक्षिणा लिखिताना तु निर्दिष्टाना च वादिना ।
तेषामेकोन्यथावादी भेदात्सर्वे न साक्षिण ॥ ३५९ ॥
अन्येन हि वृत साक्षी नैवान्यस्त विवादयेत् ।
तदभावे नियुक्तो वा बान्धवो वा विवादयेत् ॥ ३६० ॥
तद्वृत्तिजीविनो ये च तत्सेवाहितकारिण ।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिण ॥३६१॥
मातृष्वसृसुताश्चैव सोदर्यासुतमातुला ।
एते सनाभयस्तूक्ता साक्ष्य तेषु न योजयेत् ॥ ३६२ ॥
कुल्या सबन्धिनश्चैव विवाह्यो भगिनीपति ।
पिता बन्धु पितृव्यश्च श्वशुरो गुरवस्तथा ॥ ३६३ ॥
नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।
वल्लभाश्च न पृच्छेयुर्भक्तास्ते राजपूरुषा ॥ ३६४ ॥

---

356 व्य मा p 320 and टाडरानन्द (both ascribe it to नारद and कात्यायन), व्यवहारतत्त्व p 219 (ascribes to मनु and कात्यायन)

357 व्य मा p 320 (ascribe to नारद and कात्यायन), व्यवहारतत्त्व p 219 (ascribes to मनु and कात्यायन)

358 व्य मा p 322

359 अपरार्क p 670 स्मृतिच॰ III p 189 व्य मा p 325, परा मा III p 116, व्यवहारतत्त्व p 215

360 अपरार्क p 670, व्य मा p. 327 स्मृतिच॰ III p 189

361 अपरार्क p 669 स्मृतिच॰ III p 177, व्य मा p 324, वीर॰ p 160

362–363 अपरार्क pp 669–670 व्य मा p 324 makes one verse by omitting सोदर्यासुत सबन्धिनश्चैव स्मृतिच॰ III p. 180 परा मा III 99 (omits the line कुल्या पति) वीर॰ p 160 (adds after मातृष्वसृ सुताश्चैव the words पितृष्वसृसुतास्तथा । मातुलस्य सुताश्चैव)

364 स्मृतिच॰ III p 180 अपरार्क p 670, परा मा III p 100

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चैव परीक्षा कुत्रचित्स्मृता ॥ ३६५ ॥
व्याघातेषु नृपाज्ञायाः संग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥ ३६६ ॥
अन्तर्वेश्मनि रात्रौ च बहिर्ग्रामाच्च यद्भवेत् ।
एतेष्वेवाभियोगश्चेन्न परीक्षेत साक्षिणः ॥ ३६७ ॥
न साक्ष्यं साक्षिभिर्वाच्यमपृष्टैरर्थिना सदा ।
न साक्ष्यं तेषु विचेत स्वयमात्मनि योजयेत् ॥३६८॥
लेख्यारूढश्चोत्तरश्च साक्षी मार्गद्वयान्वितः ॥ ३६९ ॥
अथ स्वहस्तेनारूढस्तिष्ठंश्चैकः स एव तु ।
न चेत्प्रत्यभिजानीयात् तत्स्वहस्तैः प्रसाधयेत् ॥३७०॥
अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते ।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥३७१॥
यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।
स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥३७२॥
प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥३७३॥
अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्रावितः स्थितो गूढो गूढसाक्षी स उच्यते ३७४
साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥ ३७५ ॥

---

365 स्मृतिच॰ III p. 183, व्य. मा. p. 327 ( reads परीक्षा न कचिन्मता ), वीर॰ p. 162, व्यवहारतत्त्व p. 214.

366 अपरार्क p. 670, स्मृतिच॰ p 183, व्य. मा. p. 328.

267 अपरार्क p. 671, व्य. मा. p. 328.

368 व्य. मा. p. 326.

369 स्मृतिच॰ III. p. 184.

370 वीर॰ p. 147.

371—372 मिता॰ on या. II. 68, वीर॰ p. 143.

373—375 मिता॰ on या. II. 68, वीर॰ pp. 143–144., द वि. p. 142.

उल्लाप्यं यस्य विश्रम्भात्कार्यं वा विनिवेदितम् ।
गूढचारी स विज्ञेय कार्यमध्यगतस्तथा ॥ ३७६ ॥
अर्थी यत्र विपन्नः स्यात्तत्र साक्षी मृतान्तर. ।
प्रत्यर्थी च मृतो यत्र तत्राप्येवं प्रकल्प्यते ॥ ३७७ ॥

( साक्षिदोषोद्भावनम् )

लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृता. ।
वादकाले तु वक्तव्या' पश्चादुक्तान्न दूषयेत् ॥ ३७८ ॥
उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात्पूर्वसाहसम् ॥ ३७९ ॥
नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्य स्यात्साध्यार्थाच्चापि हीयते ॥ ३८० ॥
प्रत्यर्थिनार्थिना वापि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगित्वाद् व्यवहारान्तर न च ॥ ३८१ ॥
साक्षिदोषा. प्रवक्तव्या. संसदि प्रतिवादिना ।
पत्रे विलिख्य तान्सर्वान् वाच्यः प्रत्युत्तरं तत ॥३८२
प्रतिपन्नौ तु साक्षित्वमर्हन्ति न कदाचन ।
अतोऽन्यथा भावनीया क्रियया प्रतिवादिना ॥ ३८३॥
अभावयन्धनं दाप्य प्रत्यर्थी साक्षिण स्फुटम् ।
भाविता साक्षिण सर्वे साक्षिधर्मनिराकृता ॥३८४॥

---

376-377 टोडरानन्द

378 स्मृतिच० III. p 192, टोडरानन्द, स वि p 143 अपरार्क p 672 and व्य म. p 39 and वीर० p 164 ascribe it to बृहस्पति टोडरानन्द reads पश्चादुक्ता न

379 अपरार्क p 673, व्य.मा p 327, स्मृतिच० III p 192, स वि p 144, टोडरानन्द ( reads न तत्त कारण ), व्य म p 39, वीर० p 164

380 अपरार्क p. 671, स्मृतिच० III p 192, स वि. p 144, वीर० p 164

381 परा मा III p 106 वीर० p 163 स वि p 145 (reads न तु साक्ष्य विरोध स्यात् व्यवहारान्तर तथा)

382-384 परा मा III p 106 मिता० on या II 72 has 384 ( reads दूषण साक्षिणा स्फुटम्) व्य म p 38 attribute these to व्यास स वि p. 144 has 384 (and attributes it to कात्या ), वीर० p 165 (attributes 384 to व्यास)

आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत्।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥ ३८५ ॥
कम्पः स्वेदोथ वैकल्यमोष्ठशोषाभिमर्शने।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम्।
स्वरभेदश्च दुष्टस्य चिह्नान्याहुर्मनीषिणः ॥ ३८६ ॥
सभान्तःस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः।
सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु तु ॥ ३८७ ॥
अर्थिप्रत्यर्थिसांनिध्ये साध्यार्थस्य च संनिधौ।
प्रत्यक्षं देशयेत्साक्ष्यं परोक्षं न कथंचन ॥ ३८८ ॥
अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित्।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेषु च ॥ ३८९ ॥
तौल्यगणिमभेयानामभावेपि विवादयेत्।
क्रियाकारेषु सर्वेषु साक्षित्वं न ततोऽन्यथा ॥ ३९० ॥
वधे चेत्प्राणिनां साक्ष्यं वादयेच्छिवसंनिधौ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥ ३९१ ॥
स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम्।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥३९२॥
स्वभावेनैव यद्ब्रूयुस्तद् ग्राह्यं व्यावहारिकम्।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ॥ ३९३ ॥

---

385-86 व्य. मा p. 312-13, वीर० p. 96.

387 स्मृतिच॰ III. p 206, अपरार्क p 675, परा मा. III. p 112 (reads निवि· स्थावरेषु च).

388 टोडरानन्द, व्य म p 41.

389 स्मृतिच॰ III. p 206, परा. मा. III. p. 113, व्य. म. p 41.

390 टोडरानन्द, व्य. म p 41.

391 स्मृतिच॰ III. p. 206, परा. मा III p 113, व्य म. p. 41

392 मिता. on या. II. 79 (no name), अपरार्क p. 675, स्मृतिच॰ III. p. 208.

393 स्मृतिच॰ III. p 209, परा मा. III. p. 113 (ascribes to मनु). This is मनु 8. 78.

समवेतैस्तु यद्दृष्टं वक्तव्यं तत्तथैव तु ।
विभिन्नैकैककार्यं यद्वक्तव्य तत्पृथक् पृथक् ॥ ३९४ ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभि ।
एकैकं वादयेत्तत्र भिन्नकालं तु तद्गुरु ॥ ३९५ ॥
ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाप्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥३९६॥
साध्यार्थांशेपि गदिते साक्षिभि सकल भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्य परिकल्पितम् ॥३९७॥
ऊनाधिक तु यत्र स्यात्तत्साक्ष्यं तत्र वर्जयेत् ।
साक्षी तत्र न वृषध्य स्यादब्रुवन्दण्डमर्हति ॥ ३९८ ॥
देश कालं धनं संख्यां रूपं जात्याकृती वय ।
विसंवदेद्यत्र साक्ष्ये तदनुक्त विदुर्बुधा ॥ ३९९ ॥
निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्य आगते ।
न ब्रूयादक्षरसम न तन्निगदित भवेत् ॥ ४०० ॥
ऊनमभ्यधिकं वार्थं विब्रूयुर्यत्र साक्षिण ।
तदप्ययुक्तं विज्ञेयमेष साक्षिविनिश्चय ॥४०१॥

( साक्षिणां दोषा दण्डाश्च )

अपृष्ट सर्ववचने पृष्टस्याकथने तथा ।
साक्षिण संनिरोद्धव्या गर्ह्या दण्ड्याश्च धर्मत ॥४०२॥

---

394 395 व्य मा p 329 (reads विभिन्ने चैव यत्कार्ये), अपरार्क p 675 परा मा III p 113 attributes to वसिष्ठ and reads विभिन्नैरेव तत्कार्यं and विभिन्नैरेव प्रकीर्तितं for भिन्नकाले तु &c व्य म p 42 and स वि p 208 and वीर p 168 also ascribe to वसिष्ठ and read as परा म does

396-397 मिता on या II 20, अपरार्क p 678, स्मृतिच० III p 200 व्य मा p 312 (has 396 only)

398 399 स्मृतिच० III p 210, अपरार्क p 678, व्य मा p 333 (has 398)

400 401 स वि p 147 परा मा III p 114 ascribes the two to बृहस्पति and व्य मा p 33 ascribes to नारद

402 403 स्मृतिच० III pp 212 213, परा मा III p 116 ascribes 402 to प्रजापति

तदर्धार्धस्य नाशे तु लौकिकाश्च क्रियाः स्मृताः ।
एवं विचारयन्राजा धर्मार्थाभ्यां न हीयते ॥ ४२१॥

( दिव्यानामर्थप्रसर्थिजातिशिल्पानुसारिणी व्यवस्था )

राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषं वर्ज्यं द्विजोत्तमे ॥४२२॥
गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद् द्विजान् ॥४२३॥
न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्याच्च न क्वचित् ॥
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥४२४॥
कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत् ॥४२५॥
मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥४२६॥
मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥ ४२७॥
लिङ्गिनां प्रशठानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥ ४२८॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव च यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥ ४२९ ॥

---

त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥ कोशदानं तदर्धे वा दशपञ्चकसप्तसु । तदर्धे तण्डुला देयास्तदर्धे तप्तमाषकम् ॥ and ascribes 418 419 to वृद्धमनु)

422-423 स्मृतिच॰ III p 239 ( has the latter half of 422 ), अपरार्क p 698 टोडरानन्द वीर॰ pp 235, 237, स वि p 180 ( verse 423 only )

424 अपरार्क p 699 ( reads चैव नाभिदिव्यं विधीयते ), स्मृतिच॰ III p 240, परा मा III p 160 ( reads व्रतिनां मुखरोगिणाम् ), स वि p 173 ( व्रतिन ), वीर॰ p 236, व्य म p 48

425 426 स वि p 173, मिता॰ on या II 98 has 425, but names no author, व्य म. p. 49 has verse 426 but ascribes it to पितामह, वीर॰ p 237 ascribes both to पितामह

427-430 स्मृतिच॰ III p 241 परा मा III pp 160 161, वीर॰ p 238 टोडरानन्द परा मा reads प्रशमानां and टोडरानन्द and वीर॰ read

एतैरेव नियुक्ताना साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्या. स्वकैर्नरै. ॥४३०॥
महापातकयुक्तेषु नास्तिकेषु विशेषत ।
न देय तेषु दिव्य तु पापाभ्यासरतेषु च ॥ ४३१॥
एषु वादेषु दिव्यानि प्रतिषिद्धानि यत्नत ।
कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः ॥४३२॥
अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि सशये तेषु निर्दिशेत् ॥ ४३३ ॥

( दिव्यदेश )

इन्द्रस्थानेभिशस्ताना महापातकिना नृणाम् ।
नृपद्रोहे प्रवृत्ताना राजद्वारे प्रयोजयेत् ॥४३४॥
प्रातिलोम्यप्रसूताना दिव्य देय चतुष्पथे ।
अतोन्येषु सभामध्ये दिव्य देय विदुर्बुधा ॥४३५॥
कालदेशविरोधे तु यथायुक्त प्रकल्पयेत् ।
अन्येन हारयेद्दिव्य विधिरेष विपर्यये ॥ ४३६ ॥
अदेशकालदत्तानि बहिर्वासकृतानि च ।
व्यभिचार सदार्थेषु कुर्वन्तीह न सशय ॥४३७॥

---

प्रमद्वानां for प्रशठानां, परा मा reads न सन्ति साधव .

431 432 टोडरानन्द, वीर० p 238, स्मृतिच० III 242 (has 432 only ) अपरार्क p 696 (ascribes 432 to भृगु )

433 मिता० on या. II 99 स्मृतिच० III 242 परा मा III. p 161 ( reads धनदारापहारााणा म्लेच्छाना ) वीर० p 238 स्म म p 49 ( reads समये for सशये )

434-435 मिता on या II 99, स्मृतिच० p 244, परा मा III p 163 ( reads दण्डस्थाने for इन्द्रस्थाने ) टोडरानन्द, स वि p 183, वीर० p 241

436 टोडरानन्द, वीर० p 238

437 439 अपरार्क p 697, परा मा III p 163 and वीर० p 241 have

वाक्पारुष्ये छले वादे दाप्याः स्युस्त्रिंशतं दमम् ।
ऋणादिवादेषु धनं ते स्युर्दाप्या ऋणं तथा ॥४०३॥
यः साक्षी नैव निर्दिष्टो नाहूतो नापि दर्शितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोपि नराधमः॥४०४॥
साक्षी साक्ष्यं न चेद्ब्रूयात्समदण्डं वहेद्दणम् ।
अतोन्येषु विवादेषु त्रिशतं दण्डमर्हति ॥ ४०५ ॥
उक्त्वान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः ॥४०६॥
येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥४०७॥
यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।
प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा ॥
बहुभिश्च कुलीनैर्वा पूर्वाः स्युः कूटसाक्षिणः ॥४०८॥
यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् ।
शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोर्थ इति स्थितिः ॥४०९॥
सप्ताहात्तु प्रतीयेत यत्र साक्ष्यनृतं वदेत् ।
रोगोग्निर्ज्ञातिमरणं द्विसप्ताहात्त्रिसप्त वा ।
षट्चत्वारिंशके वापि द्रव्यजात्यादिभेदतः ॥४१०॥

( दिव्यानि तेषां च विवादपदविषयिणी व्यवस्था )

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥४११॥

---

404 व्य. मा p 326, टोडरानन्द, व्यवहारतत्त्व p 216, स्मृतिच० III, 212 ascribes to वसिष्ठ.

405 अपरार्क p. 677, परा मा III. p 115, स्मृतिच० III. 213, टोडरानन्द.

406 मिता० on या. II 82, स्मृतिच० III 214, वीर० p. 184.

407 अपरार्क p 672, स्मृतिच० III. p 217.

408 अपरार्क p. 679, व्य मा p 335 ( read साक्षिभिः पूर्ववादिना and अनुक्तास्तु कुलीनैर्वा ), स्मृतिच० III. p. 218, वीर० p 179

409 मिता० on या II 80, अपरार्क 676, व्य. मा. p 336 ( which reads क्रिया न स्यात् and last line as शुद्धताया तु वाक्यार्थः शुद्धः शुद्धोन्यथा न तु ), वीर० p 174

410 स. वि. p. 140.

411 अपरार्क p 695, स्मृतिच० III p 224, परा. मा. III. p. 152, स. वि. p. 167, वीर० p 228

पार्थिवे शङ्कितानां तु तुलादीनि नियोजयेत्।
आत्मशुद्धिविधाने च न शिरस्तत्र कल्पयेत् ॥४१२॥
लोकापवाददुष्टानां शङ्कितानां च दस्युभिः।
तुलादीनि नियोज्यानि न शिरस्तत्र वै भृगु ॥४१३॥
न शङ्कासु शिरः कोशे कल्पयेत्तु कदाचन।
अशिरांसि च दिव्यानि राजभृत्येषु दापयेत् ॥ ४१४॥
शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥ ४१५॥
दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत्।
स्तेयसाहसयोर्दिव्यं स्वल्पेप्यर्थे प्रदापयेत् ॥ ४१६॥
सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्।
हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥ ४१७॥
ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥ ४१८॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम्।
विंशद्दशविनाशे वै कोशपानं विधीयते ॥ ४१९॥
पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तन्दुलाः।
तदर्धार्धस्य नाशे तु स्पृशेत्पुत्रादिमस्तकम् ॥ ४२०॥

---

412 स्मृतिच॰ III p 225 परा मा III p 153 (reads निर्दिष्टानां च दस्युभिः। शङ्काशुद्धिपराणां न दिव्यं देयं शिरो विना) वीर॰ p 229 (which reads mostly like परा मा)

413 अपरार्क p 696 स्मृतिच॰ III p 226 परा मा III p 153

414 अपरार्क p 696 (first half) स्मृतिच॰ III p 226 परा मा III p 153

415 स्मृतिच॰ III p 226 परा मा III p 154, वीर॰ p 229 स वि p 168 अपरार्के p 695 (no name)

416 417 मिता॰ on या II 99 अपरार्के p 700 स्मृतिच॰ III p 232 (omits the half स्तेय &c) टाइरनद स च pp 178 179, वीर॰ p 231 स्मृतिच॰ reads सर्वं द्रव्य॰

418 421 मिता on या II 99 स्मृतिच॰ p 233 and अपरार्के p 700 (omits एव विचार्यत हीयते) परा मा III p 155 (omits एव हीयते) वीर॰ p 231 स वि pp 174 and 178 (p 178 presents two other verses on same subject ज्ञात विष तु पादोने दत्तभुक्तचतुर्थके। अप

साधयेत्तत्पुनः साध्यं व्याघाते साधनस्य हि ।
दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ॥
मूर्खैर्लुब्धैश्च दुष्टैश्च पुनर्देयानि तानि वै ॥४३८॥
तस्माद्यथोक्तविधिना दिव्यं देयं विशारदैः ।
अयथोक्तप्रयुक्तं तु न शक्तं तस्य साधने ॥४३९॥
शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा ।
शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥४४०॥

(अग्निदिव्यविधिः)

प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते ।
न दग्धं तु विदुर्देवास्तस्य भूयोपि दापयेत् ॥४४१॥

(उदकदिव्यविधिः)

शरांस्त्वनायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत् ॥४४२॥
क्षिप्ते तु मज्जनं कार्यं गमनं समकालिकम् ।
गमने त्वागमः कार्यः पुमानन्यो जले विशेत् ॥४४३॥
शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥४४४॥
निमज्ज्योत्प्लवते यस्तु दृष्टश्चेत्प्राणिभिर्नरः ।
पुनस्तत्र निमज्जेत्स देशचिह्नविभाविते ॥४४५॥

---

only verse 437 which they ascribe to नारद; स्मृतिच० p. 244 has 437; टोडरानन्द has verse 439 (which ascribes it to बृहस्पति and कात्यायन).

440 अपरार्क p 704, स्मृतिच० III. p. 259, व्य. म. p. 61, वीर० p. 254.

441 अपरार्क p. 709, मिता० on या II. 107 (which reads प्रस्खलन्नभिशास्तश्चेत्), परा. मा. III. p 181 (प्रज्वालेनाभिशस्तश्चेत्), स्मृतिच० III. p. 271, वीर० p. 267, स. वि. p 199.

442 अपरार्क p. 709, मिता० on या. II. 109 (no name) reads शरांश्चानायसाग्रांस्तु), टोडरानन्द, व्य. म. p 77 परा मा. III. p. 183 (no name), वीर० p. 268, स. वि p 200.

443 अपरार्क p. 710, वीर० p 272 (first half).

444-445 अपरार्क 711, टोडरानन्द (reads निमज्जेत अङ्गचिह्नविभाविते), वीर० p 273 (has only 444), परा. मा III. p. 186 (has both and reads निमज्जेत्तु स सचिह्नविभाविते), स. वि. p. 203 (has 444 without name).

( विषदिव्यविधि )

अजाशृङ्गनिभं श्यामं सुपीनं शृङ्गसम्भवम् ।
भङ्गे च शृङ्गवेराभं ख्यातं तच्छृङ्गिणा विषम् ॥४४६॥
रक्तं तदक्षितं कुर्यात्कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं दिव्यं दिव्यविशारदैः ॥४४७॥
वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चयः ।
शुक्तिशङ्खाकृतिर्भङ्गे विद्यात्तद्वत्सनाभकम् ॥४४८॥
मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात्
वाह्यमेव समाश्रयात लक्षणं धर्मसाधकं ॥४४९॥
पूर्वाह्णे शीतले देशे विषं दद्यात्तु देहिनाम्
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणेन तु ॥४५०॥
विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः ।
तमष्टभागहीनं तु शोध्ये देयं घृताप्लुतम् ॥४५१॥

( कोशदिव्यविधि )

स्वल्पेऽपराधे देवानां स्नापयित्वायुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥४५२॥

( तण्डुलविधि )

देवतास्नानपानीयदिव्ये तण्डुलभक्षणे ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥४५३॥
अवष्टम्भाभियुक्तस्य विशुद्धस्यापि कोशतः ।
सदण्डमभियोगं च दापयदभियोक्तकम् ॥
दिव्येन शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥४५४॥

---

446 448 अपरार्क p 712 टोडरानन्द ( reads सुपीत ) वीर० p 274 ( has all three )
449 अपरार्क p 712 टोडरानन्द वीर० p 274
450 मिता० on या II 111 अपरार्क p 712 परा मा III p 188 स नि p 206 and वीर० p 275 (both read त्रिंशद्गुणान्वितम्)
451 अपरार्क p 713 मिता० on या II 111 परा मा III p 188 and वीर० p 274 ascribe it to नारद It is नारद (ऋणादान verse 323)
452 अपरार्क p 714 टोडरानन्द वीर० p 279 ( reads पाययित्वायुधोदकम् )
453 टोडरानन्द and व्य म p 83 वीर० pp 282 283
454 टोडरानन्द

शोणितं दृश्यते यत्र हनुबालं च सीदति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥४५५॥
अथ दैवविसंवादात्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं तु यत्नेन तमर्थं दण्डमेव च ॥४५६॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥४५७॥
क्षयातिसारविस्फोटास्तात्वस्थिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥४५८॥
शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ॥४५९॥
विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥४६०॥
सहस्रं षट्शतं चैव तथा पञ्च शतानि च ।
चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ॥४६१॥

( शपथविधिः )

यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥४६२॥
आचतुर्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥४६३॥

455 टोडरानन्द (ascribes to both बृहस्पति and कात्यायन); अपरार्क p. 715 and व्य. म. p. 83 ascribe to पितामह. It is नारद (ऋणादान 342)

456 अपरार्क p. 715, स्मृतिच॰ III. p. 273 (reads दैवविसंवादः and. अभियुक्तं प्रयत्नेन), व्य. म. p. 88.

457 व्य. म. p. 88, व्यवहारतत्त्व p. 229.

558 स्मृतिच॰ p. 273, व्य. म. p. 88 (reads ज्वरातीसारविस्फोटगूढास्थि॰), व्यवहारतत्त्व p. 229 (reads ज्वराती॰ as व्य. म. does).

459 मिता. on या. II. 113, स्मृतिच॰ III. p. 288, परा. मा. III. p. 204 (reads न दण्ड दापयेच्छुद्धं न शुद्धो), टोडरानन्द ascribes to मनु and कात्यायन.

460–461 मिता. on या. II. 113, स्मृतिच॰ III. p. 288, परा॰ मा॰ III. p. 204, टोडरानन्द (ascribes to मनु and कात्यायन).

462 वीर॰ p. 287.

( उन्मत्तास्वतन्त्रादिकृतानां विचार )

उन्मत्तेनैव मत्तेन तथा भावान्तरेण वा ।
यद्दत्तं यत्कृतं वाथ प्रमाणं नैव तद्भवेत् ॥ ४६४ ॥
अस्वतन्त्रकृतं कार्यं तस्य स्वामी निवर्तयेत् ।
न भर्त्रा विवदेतान्यो भीतोन्मत्तकृतादृते ॥ ४६५ ॥
पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा ।
कनिष्ठो वाविभक्तस्वो दासः कर्मकरस्तथा ॥ ४६६ ॥
न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥४६७॥
प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं ते कुर्वन्तोप्यनुमोदिताः ॥ ४६८ ॥
क्षेत्रादीनां तथैव स्युर्भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छता ॥ ४६९ ॥
निसृष्टार्थस्तु यो यस्मिन् तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥ ४७० ॥
सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥४७१॥

( निर्णयकृत्यम् )

शुद्धिस्तु शास्त्रतस्त्वक्षैश्चिकित्सा समुदाहृता ।
प्रायश्चित्तं च दण्डं च ताभ्यां सा द्विविधा स्मृता ॥४७२॥

---

463 व्य म p 88 (reads शपथे ) वीर० p 287, व्यवहारतत्त्व p 229

464 स्मृतिच० III p 305, परा मा III p 216 (reads वाचान्तरेण for भावान्तरेण)

465 स्मृतिच० III p 300, स वि pp 501–502 (reads न वार्तां दिव देतान्यो ?)

466 शेखरानन्द वीर० p 128

467–471 स्मृतिच० III pp 307 309 परा मा III pp 217–219 (has all five except 470) शंकर नन्द (reads नानुमोदिताः for नानुवर्णिताः in 467) वीर० pp. 126 128

472 स्मृतिच० III p 300, स वि p 502

अनेकार्थाभियोगेपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥४७३॥
सर्वापलापं यः कृत्वा मिथ्याल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥ ४७४ ॥
पत्र धर्मासनस्थेन सभ्येनैव धिया दिना ।
कार्याणां निर्णयो दृश्यो ब्राह्मणैः सह नान्यथा ॥४७५॥
व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥ ४७६ ॥

( दण्डविधि )

राज्ञा तु स्वामिने विप्रः सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् ॥४७७॥
रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ।
वणिजः कर्षकांश्चापि शिल्पिनश्चाब्रवीद्भृगुः ॥४७८॥
धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते ॥ ४७९ ॥
कर्षकान् क्षत्रविट्शूद्रान् समीहानांस्तु दापयेत् ॥४८०॥

---

473 मिता on या II 20 अपरार्क p 625 व्य मा p 312 (reads नाधिक धनम्) स्मृतिच० III p 283, परा मा III p 203 वि र p. 48 वीर० p 132

474 व्य मा p 311 (reads मिथ्याल्पमपि and दाप्य स्यादिति युक्तो) स्मृतिच० III p 283

475 स्मृतिच० III p 289

476 दायभाग

477 मित on या II 40 अपरार्क p 645 (reads स्वामिनो) स्मृतिच० III p 285 परा मा III p 200

478 मिता० on या II 40 (first half only) अपरार्क p 645 (first half only) परा मा III pp 200 and 256 स्मृतिच० III p 284 (first half) अपरार्क reads छलेन न च दापयेत्

479 मिता on या II 26, अपरार्क p 633 (reads बद्ध्वा स्वामिन कर्म) स्मृतिच० III pp 292 and 390 परा मा III p 209

480 स्मृतिच० III p 384

आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधेषु दण्डो नैव विधीयते ॥४८१॥
प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।
दण्डस्तत्र तु नैव स्यादेष धर्मो भृगुस्मृतः ॥४८२॥
न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥४८३॥
चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् ।
शारीरधनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥४८४॥
येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन चेत्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥४८५॥
प्रव्रज्यावसितं शूद्रं जपहोमपरायणम् ।
वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दमम् ॥४८६॥
सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः ।
तदर्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्तनम् ॥४८७॥
नास्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यति ।
प्रभुणा शासनीयास्ता राजा तु पुरुषं नयेत् ॥४८८॥
प्रोषितस्वामिका नारी प्रापिता यद्यपि ग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्प्रत्यागतः प्रभुः ॥४८९॥
कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तु स्यात्तन्मूल्यं वाथ राजनि ॥४९०॥
माषपादो द्विपादो वा दण्डो यत्र प्रवर्तितः ।
अनिर्दिष्टं तु विज्ञेयं माषकं तु प्रकल्पयेत् ॥४९१॥

---

481 स्मृतिच० III p 296 परा मा III p 206
482 स्मृतिच० III p 297 परा मा III p 211 (read दण्ड तत्र)
483–484 परा मा III p 208 Verse 483 is मनु 8 380
485 स्मृतिच० III p 298 परा मा III p 211 ascribes to पितामह
486 स्मृतिच० III p 298 परा मा III p 212 ascribes to पितामह
487 स्मृतिच० III p 745 व्य म p 246
488 स्मृतिच० III p 749
489 स्मृतिच० III p 749
490–492 स्मृतिच० III p 299 कुल्लूक on मनु 8 319 reads 491 (latter

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पित ।
प्रयोगो यत्र चैव स्यादाधिभोग स उच्यते ॥५०१॥

( अकृतवृद्धि )

यो याचितकमादाय तमदत्त्वा दिश व्रजेत् ।
ऊर्ध्वं सवत्सरात्तस्य तद्धन वृद्धिमाप्नुयात् ॥५०२॥
कृत्वोद्धारमदत्त्वा यो याचितस्तु दिश व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धन वृद्धिमाप्नुयात् ॥५०३॥
स्वदेशेपि स्थितो यस्तु न दद्याद्याचित क्वचित् ।
स ततोकारिता वृद्धिमनिच्छन्त च दापयेत् ॥५०४॥
प्रीतिदत्त न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्त चेद्वर्धते पञ्चक शतम् ॥५०५॥
निक्षिप्त वृद्धिशेष च क्रयविक्रयमेव च ।
याच्यमानमदत्त चेद्वर्धते पञ्चक शतम् ॥५०६॥
पण्य गृहीत्वा यो मूल्यमदत्त्वैव दिश व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धन वृद्धिमाप्नुयात् ॥५०७॥

---

501 स्मृतिच॰ III p 360 ( reads वृद्धि तु ), वि र p 12 वि चि p 4, वीर॰ p 295

502 मिता॰ ( on या II 38 ) स्मृतिच॰ III p 364 परा मा III p 223, वि र p 16 ( reads ऋतुत्रयस्योपरिष्टात् ) स वि p. 225, वीर॰ p 301

503 मिता on या II 38 अपरार्क p 642 ( reads ऋतुत्रयस्योपरिष्टात् for ऊर्ध्वं &c ) वि र p 15 परा मा III p 223 वीर॰ p 302

504 मिता॰ on या II 38 अपरार्क p 642 ( reads याचितोऽसकृत् and 'स ततोकारितो च्छन्तमपि चानहेत् ), स्मृतिच॰ III p 364, वि र p 15 ( reads याचितोसकृत् and स ततोकारितो च्छन्तमपि चावहेत् ), स वि p 225, वीर॰ p 302

505 स्मृतिच॰ III p 365, कुल्लूक (on मनु 8 152), परा मा III p, 223, वि र p 15, स वि p 226

506 मिता॰ on या II 66 परा मा III p 224, वि र p 15 वीर॰ p 302 वि चि p 6

507 स्मृतिच॰ III p 363 परा मा III p 224 वि र p 15, स वि p 225, वीर॰ p 302

चर्मसस्यासवद्यूते पण्यमूल्ये च सर्वदा।
स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु च ॥५०८॥

( वृद्धेः परिमाणं )

ग्राह्यं स्याद् द्विगुणं द्रव्यं प्रयुक्तं धनिनां सदा।
लभते चेन्न द्विगुणं पुनर्वृद्धिं प्रकल्पयेत् ॥५०९॥
मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फालकैदाविकस्य च ॥५१०॥
तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥५११॥
कुप्यं पञ्चगुणं भूमिस्तथैवाष्टगुणा मता।
सद्य एवेति वचनात् सद्य एव प्रदीयते ॥५१२॥

( ऋणोद्धरणं )

( अनेकर्णसमवाये विधिः )

एकाहे लिखितं यत्तु तत्तु कुर्यादृणं समम्।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥५१३॥
नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ॥
तत्तदेवाग्रतो देयं राज्ञः स्याच्छ्रोत्रियादनु ॥५१४॥
यस्य द्रव्येण तत्पण्यं साधितं यो विभावयेत्।
तद् द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥५१५॥

---

508 परा. मा. III. p. 225, स्मृतिच॰ III. p. 366, वि. र. p. 20, स. वि. p. 226, वीर॰ p. 304.

509 अपरार्क p. 643, वि. र. p. 72, वीर॰ p. 338.

510 वि. र. p. 17, स. वि. p. 226, वि. चि. p 8, व्य. म. p 170.

511 स्मृतिच॰ III. p. 373, परा. मा. III. p. 228, वि. र. p 19, स. वि. p. 227, वीर॰ p 299, व्य. म. p. 170.

512 स. वि. p. 230.

513 अपरार्क p. 645, स्मृतिच॰ III. p. 391, स वि. p. 255, वीर॰ p. 339.

514 स्मृतिच॰ III. p. 390, स. वि. p 255, वीर॰ p. 339.

515 अपरार्क p. 645, स्मृतिच॰ III. p. 391, परा. मा. III. p 259, स. वि. p. 255, वीर॰ p. 340.

( आधि )

द्रव्य गृहीत्वा वृद्ध्यर्थं भोगयोग्य ददाति चेत्।
जङ्गम स्थावर चापि भोग्याधि स तु कथ्यते ॥
मूल्य तदाधिक दत्त्वा स्वक्षेत्रादिकमाप्नुयात् ।५१६॥
आधिमेक द्वयोर्यस्तु कुर्यात्ता प्रतिपन्नयेत् ।
तयो पूर्वकृत ग्राह्य तत्कर्ता चारदण्डभाक ॥५१७॥
आधान विक्रयो दान लेख्यसाक्ष्यकृत यदा ।
एकक्रियाविरुद्ध तु लेख्य तत्रापहारकम् ॥५१८॥
अनिर्दिष्ट च निर्दिष्टमत्र च विलेखितम् ।
विशेषलिखित ज्याय इति कात्यायनोऽब्रवीत् ।५१९॥
यो विद्यमान प्रथममनिर्दिष्टस्वरूपकम् ।
आकाशभूतमाद्ध्यादनिर्दिष्ट च तद्भवेत् ॥
यद्यत्तदाद्य विषे तदादिष्ट विनिर्दिशत् । ५२०॥
यस्तु सर्वस्वमादिश्य प्राक् पश्चाद्ग्राममचिह्नितम् ।
आदध्यात्तत्कथ न स्याच्चिह्नित बलवत्तरम् ॥५२१॥
मर्यादाचिह्नित क्षेत्र ग्राम वापि यदा भवेत् ।
ग्रामाद्यश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात् ॥५२२॥

---

516 स वि p 234

517 स्मृतिच० III p 337 परा मा III p 234 (reads द्वयो कृत्वा यथका) व्रि र p 35 ( reads आधाता for तत्कर्ता ) स वि p 237 ( reads क्षेत्र पतिर्भवेत ), वीर० p 312

518 स्मृतिच० III p 338 परा मा III p 234 स वि p 237, वीर० p. 312 कृत्यकल्पतरु

519 स्मृतिच० III p 338 परा मा III p 235 ( reads अनिर्दिष्टाच्च निर्दिष्ट ) स वि p 237, वीर० p 312 कृत्यकल्पतरु

520 परा मा III p 235 (reads प्रथममनिर्दिष्ट० आकाशभूतमाधान) वीर० p 313 स्मृतिच० III p 338 (reads अनिर्दिष्ट० दध्यादादिष्ट नेव तद्भवत्)

521 स्मृतिच० III p 338 (reads कथ नु स्यात्) स वि p 236 ( reads आदध्यात् कथ नु स्यात् ) वीर० p 313

522 स्मृतिच० III p 336 स वि p 236

आधीकृतं तु यत्किंचिद्विनष्टं दैवराजतः ।
तत्रर्णं सोदयं दाप्यो धनिनामधमर्णकः ॥५२३॥
न चेद्धनिकदोषेण निपतेद्वा म्रियेत वा ।
आधिमन्यं स दाप्यः स्यादृणान्मुच्येत नर्णिकः॥५२४॥
अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः ॥५२५॥
यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः ।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात्पूर्वसाहसम् ॥५२६॥
बलादकामं यत्राधिमनिसृष्टं प्रवेशयेत् ।
प्राप्नुयात्साहसं पूर्वमाधाता चाधिमाप्नुयात् ॥५२७॥
आधिं दुष्टेन लेख्येन भुङ्क्ते यमृणिकाद्धनी ।
नृपो दमं दापयित्वा आधिलेख्यं विनाशयेत् ॥५२८॥
आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत् ।
राज्ञस्ततः स विख्यातो विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत् ॥५२९॥

( प्रतिभूविधानम् )

दानोपस्थानवादेषु विश्वासशपथाय च ।
लग्नकं कारयेदेवं यथायोगं विपर्यये ॥५३०॥

---

523 स्मृतिच० III p 321, वि र p. 27.
524 स्मृतिच० III p 323 ( reads निपतेद्विक्रियेत ), वि. र. p. 26, स. वि. p. 236 (reads स चेद्धनिक० and सर्णिक for नर्णिक.), वि. चि. p. 11, वीर० p 309
525 अपरार्क p 659, स्मृतिच० III. p 326, परा.मा.III. p. 238, वि. र.p. 24, स वि p 235, वीर० 20 p. 308.
526 स्मृतिच० III, p 326, परा. मा III p 238, वि र. p. 25, वीर० p 308
527 स्मृतिच० III p 326, स. वि. p 235
528 स्मृतिच० III p. 329, स वि p. 24, वीर० p. 310.
529 अपरार्क p. 658, स्मृतिच० III. p 333, परा मा. III. p. 241, वि. र. p. 34 (reads यत्र नष्टः स्यात्), स वि p 245, वि. चि. p. 11, वीर० p 317.
530 अपरार्क p 655 ( reads °स्थानविश्वासविवादशपथाय ), स्मृतिच० III. p 347, परा मा III p 249, स वि p 247 (reads दानोपस्थान०), वीर० p. 323.

दर्शनप्रतिभूर्यस्तं देशे काले न दर्शयेत्।
निबन्धमावहेत्तत्र दैवराजकृताद्दते ॥५३१॥
नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥५३२॥
काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
स तमर्थं प्रदाप्य स्यात् प्रेते चैवं विधीयते ॥५३३॥
गृहीत्वा बन्धकं यत्र दर्शनेस्य स्थितो भवेत्।
विना पित्रा धनं तस्माद् दाप्य-स्यात्तदृणं सुत ॥५३४॥
यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानव ।
अदर्शयन्स तं तस्मै प्रयच्छेत्स्वधनादृणम् ॥५३५॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥५३६॥
एकच्छायाश्रिते सर्वं दद्यात्तु प्रोषिते सुत.।
मृते पितरि पित्रंशं परर्ण न बृहस्पति ॥५३७॥

---

531 अपरार्के p 655, स्मृतिच० III. p 349, वि र p 41, वीर० p 323, व्य म. p. 176 स. वि p 247 and वीर० also at pp 321 322 read देशे काले च दर्शयेत् and connect that half verse with यद्यसौ. .र्भवेत् below

532–533 मिता on या II. 57, अपरार्के p 656 ( only 532 ), स्मृतिच० III. p 348, वि र p 42, स वि p 248 ( reads कालेऽयतीते and कार्ये चैव विधिः), वीर० pp. 323 and 330, परा मा III p 24 (reads काले प्रतीते) स्मृतिच० and वीर० also at p 323 reads काले प्रतीते

534 मिता० on या. II 54 अपरार्के p 656 ( reads यस्तु दर्शनस्य and विभाव्य वादिना तत्र दाप्यः ) परा मा III 251, वि र p 43 ( follows अपरार्के ), वीर० p. 326 स्मृतिच० III p 353 (reads यस्तु दर्शनप्रतिभूः स्थित विभाव्य वादिना तत्र)

535–536 वीर० p 322 attributes to both कात्यायन and बृहस्पति वीर० p 325 attributes verse 536 to बृहस्पति परा मा III p 250 and व्य. म. p 176 attribute 536 to बृहस्पति

537 स्मृतिच. III p 355, वीर० p 327 (says that this is the reading of the स्मृतिच०)

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुत सर्वं पित्रंशं तु मृते सुत. ॥५३८॥
प्रातिभाव्यं तु यो दद्यात् पीडित प्रतिभावितः।
त्रिपक्षात्परत सोऽर्थं द्विगुणं लब्धुमर्हति ॥५३९॥
यस्यार्थे येन यद्दत्तं विधिनाभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात् ॥५४०॥
सत्यंकारविसंवादे द्विगुणं प्रतिदापयेत् ।
अकुर्वतस्तु तद्धानि सत्यंकारप्रयोजनम् ॥५४१॥
( पित्रादिभि कृतमृण केन प्रतिदेयम् )
कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्ते च विद्यादापत्कृते तु तत् ॥५४२॥
कन्यावैवाहिकं चैव प्रेतकार्ये च यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभो. ॥५४३॥
ऋणं पुनर्कृतं पित्रा न देयमिति धर्मत. ।
देयं प्रतिश्रुत यत्स्यात् यच्च स्यादनुमोदितम् ॥५४४॥
प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥५४५॥

---

538 मिता० on या II 55 ( reads मृते समम् ), परा मा III p 251, वि. र. p 52 (reads पित्र्यर्णं मृतस्य च), स वि p 250, वीर० p 327 (पित्र्यमश मृते तु स )

539 अपरार्क p 657, स्मृतिच० III p 357, परा मा. III p. 252 ( reads दण्डित for पीडित ), वि र p 45, वीर० p 328 ( ascribes to both कात्यायन and बृह० )

540 अपरार्क p 657, स्मृतिच० III p 356 (reads विवादेऽभ्यर्थितेन), वि र. p. 46 (°भ्यर्थितेन) वीर० p 328

541 विश्वरूप on या II 63

542-543 अपरार्क p 647, स्मृतिच० III p 408 ( reads अशक्ते तु, व्याधि॰ ॰तेषत्र ) परा मा III p 268, वि र p 56, वीर० p 352, स. वि. p 253 (changes the order of the lines )

544 स्मृतिच० III p 408 409, वीर० p 353, स वि p 263 (latter half ), वि र p 57 (reads यच्च स्यादनुमोदितम्)

545 अपरार्क p 648 ( reads दासस्त्रीमातृ० ), स्मृतिच० III p 407, परा. मा III p 268 ( reads दद्यात्पुत्रेण वा पिता ), वि र p 56, स वि p 263

भर्त्रा पुत्रेण वा सार्धं केवलेनात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥५४६॥
मर्तुकामेन या भर्त्रा प्रोक्ता देयमृणं त्वया ।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रियाम् ॥५४७
विद्यमानेपि रोगार्ते स्वदेशात्प्रोषितेपि वा ।
विंशात्संवत्सराद्देयं ऋणं पितृकृतं सुतैः ॥ ५४८ ॥
व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत् ॥ ५४९ ॥
सांनिध्येपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः ॥ ५५० ॥
पितॄणां सूनुभिर्जातैर्दीनैर्नैवाधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥५५१॥
नाप्राप्तव्यवहारेण पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेन्यथा ॥ ५५२ ॥
अप्राप्तव्यवहारश्चेत्स्वतन्त्रोपीह नर्णभाक् ।
स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठे (श्रैष्ठ्ये?) गुणवयःकृतम् ॥५५३॥
यद्दत्तं दत्तदोषं वा देयं पैतामहं तु तत् ।
सदोषं व्याहृतं पित्रा नैव देयमृणं क्वचित् ॥ ५५४ ॥

---

546 अपरार्क p 649, स्मृतिच० III p 411, वि र p 60, वीर० p 353
547 स्मृतिच० III p 412 परा मा III p 270 (धन दद्यात्सुतो यथा), स वि p 263 वीर० p 354
548 अपरार्क p 650, स्मृतिच० III p 394 परा. मा III p 263, स वि p 256, वीर० p 342
549 अपरार्क p 650, वि र p 51
550 अपरार्क p 650, वि र p 51, परा मा III p 263, वि चि p 16, स्मृतिच० III p 394 All except अपरा० ascribe to बृहस्पति
551 स्मृतिच० III p 393 परा मा III p 263, वीर० p 341
552 अपरार्क p 650 स्मृतिच० III p 393 (reads °व्यवहारैस्तु) वि र p 54 (°व्यवहारैस्तु) परा मा III p 263
553 स्मृतिच० III p 393 (first half) वीर० pp 340 341
554 अपरार्क p 650, स्मृतिच० III p 398 (reads पदप दत्तदेय) वि र p 48, वि चि p 16

पित्रा दत्तमृणं यत्तु क्रमायातं पितामहात् ।
निर्दोषं नोद्धृतं पुत्रैर्देयं पौत्रैस्तु तद्भृगु ॥ ५५५ ॥
पैतामहं तु यत्पुत्रैर्न दत्तं रोगिभिः स्थितैः ।
तस्मादेवंविधं पौत्रैर्देयं पैतामहं समम् ॥ ५५६ ॥
ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रव ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥५५७॥
यद्देयं पितृभिर्नित्यं तदभावे तु तद्धनात् ।
तद्धनं पुत्रपुत्रैर्वा देयं तत्स्वं मिते तदा ॥ ५५८ ॥
पित्रर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके द्रव्यं मृते पुत्रैस्तु दाप्यते ॥५५९॥
पुत्राभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन न दातव्यं तस्मात्तद्धि निवर्तते ॥५६०॥
प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत्क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम् ॥५६१॥
रिक्थहर्त्रा ऋणं देयं तदभावे च योषितः ।
पुत्रैश्च तदभावेन्यै रिक्थभाग्भिर्यथाक्रमम् ॥५६२॥
यावत्र पैतृकं द्रव्यं विद्यमानं लभेत्सुतः ।
सुसमृद्धोपि दाप्य. स्यात्तावदेवाधमर्णिकः ॥५६३॥

---

555 अपरार्क p. 651, स्मृतिच॰ III p 397, वि. र. p. 48, स. वि. p. 258.

556 स्मृतिच॰ III p. 398, वि र. p. 48

557 अपरार्क p. 651, स्मृतिच॰ III. p 394, परा मा. III. p. 263, वि. र. p. 63, वीर॰ p 351

558 स. वि. p. 258

559 स्मृतिच॰ III p 395, परा. मा. III. p. 264, वीर॰ p 344 ( reads पुत्रैस्तु दाप्यते )

560 स्मृतिच॰ III p. 399 ( तस्मात्तद्धि निवर्तते ), परा. मा. III. p. 264, वि र. p. 49 ( reads पित्र्यमात and चतुर्थेन यदा दत्तं ), वीर॰ p. 342 ( reads पित्रभावे तु )

561 अपरार्क p. 650, वि र. p 44.

562-563 विश्वरूप on या., II. 47.

लिखितं मुक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै यत्तु विद्यात्कामकृतं नृणाम् ॥५६४॥
यत्र हिंसां समुत्पाद्य क्रोधाद् द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥५६५॥
स्वस्थेनार्तेन वा देयं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥५६६॥
निर्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव हि ॥५६७॥
शौण्डिकव्याधजनकगोपनाविकयोषिताम् ।
आधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत् ॥५६८॥
न च भार्याकृतमृणं कथंचित्पत्युराभवेत् ।
आपत्कृतादृते पुंसां कुटुम्बार्थे हि विस्तरः ॥५६९॥
अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ।
तेषां तु तत्परा वृत्तिः कुटुम्बं च तदाश्रयम् ॥५७०॥
अमतेनैव पुत्रस्य प्रधना यान्यमाश्रयेत् ।
पुत्रेणैवापहार्यं तद्धनं दुहितृभिर्विना ॥५७१॥
ऋणार्थमाहरेत्तन्तु न सुखार्थं कदाचन ।
अयुक्ते कारणे यस्मात्पितरौ तु न दापयेत् ॥ ५७२ ॥
या स्वपुत्रं तु जह्यात्स्त्री समर्थमपि पुत्रिणी ।
आहृत्य स्त्रीधनं तत्र पित्र्यर्णं शोधयेन्मनुः ॥ ५७३ ॥
बालपुत्राधिकार्था च भर्तारं यान्यमाश्रिता ।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृत ॥ ५७४ ॥

564–565 अपरार्के p. 648, स्मृतिच॰ III. p 396, परा मा. III. p. 266 वि. र. p. 58, वि. चि. p. 17, स वि. p. 257, वीर॰ pp. 343-344
566 विवादचन्द्र, वि. चि. p. 16, ( reads मुक्तेन ) व्य. म p. 206.
567 अपरार्के p. 652, वि र. p. 62., व्य म p. 187, वि. चि. p. 19.
568 वीर॰ p. 354.
569–570 वीर॰ p. 354 वि. चि p 19 ascribes these two to नारद. अपरार्क ( p 649 ) also does so
571–573 वि. र p. 65
574 अपरार्के p 654, स्मृतिच॰ III. p 406 ( reads भ्रातारं यान्य॰), परा. मा. III. p. 275 ( reads भ्रातरं या॰), स. वि p. 263 ( reads पुत्रादिकर्तो य भ्रातारं and बालपुत्रादिविश्रुतम् ), वीर॰ p. 355, वि. र. p. 66.

दीर्घप्रवासिनिर्बन्धुजडोन्मत्तार्तलिङ्गिनाम् ।
जीवतामपि दातव्यं तत्स्त्रीद्रव्यसमाश्रितैः ॥ ५७५ ॥
व्यसनाभिप्लुते पुत्रे बालो वा यत्र दृश्यते ।
द्रव्यहृद्दाप्यते तत्र तस्याभावे पुरन्धिहृत् ॥ ५७६ ॥
पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् ।
योषिद्ग्राहः सुताभावे पुत्रो वात्यन्तनिर्धनः ॥ ५७७ ॥
देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भर्तुरर्थे कृतं यत्स्यादभिधाय गते दिवम् ॥ ५७८ ॥
देयं पुत्रकृतं तत्स्याद्यच्च स्यादनुवर्णितम् ।
कृतासवादितं यच्च श्रुत्वा चैवानुचोदितम् ॥ ५७९ ॥

( अधमर्णिकस्यावरोधादिना धनाद्यासविचारः )

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावच्च दद्याद्देयं च देशाचारस्थितिर्यथा ॥ ५८० ॥
विण्मूत्रशङ्का यस्य स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतो वानुगन्तव्यो निबद्ध वा समुत्सृजेत् ॥ ५८१ ॥
स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने ।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥५८२॥
यो दर्शनप्रतिभुवं नाधिगच्छेच्च चाश्रयेत् ।
स चारके निरोद्धव्यः स्थाप्यो वा वेच रक्षिणः ॥५८३॥
न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः ।
सोऽनिबद्धः प्रमोक्तव्यो निबद्धः शपथेन वा ॥ ५८४ ॥

575 अपरार्क p 654 (reads 'द्रव्य समाश्रितैः ) वि र p 66, वि चि p 20

576 स्मृतिच॰ III. p 402 वि र p 64 and वि चि p 18 (read वाले), वीर॰ p 351 ( reads बाले वा दृश्यते )

577 स्मृतिच॰ III p 403 वीर॰ p 351

578-579 स्मृतिच॰ III p 407 वीर॰ p 353 ( reads अविधाय and has 578 only ) वि र p 59 ( has only 578 and reads भर्त्तृयार्थे )

580 स्मृतिच॰ III p 384 वि र p 67, व्य म p 179 वीर॰ p 334

581 स्मृतिच॰ III p 384 वि र p. 69 ( reads सदा for शङ्का and निबन्ध ) व्य म p 179 ( reads निबन्ध ), वीर॰ p 334

582-584 स्मृतिच॰ III p 385, वीर॰ pp 434-435 ( reads वारक in 583-584 ), वि र p. 69 ( reads ह्यनिबद्ध and निबद्ध शपथम )

पीडनेनोपरोधेन साधयेद्वणिक धनी ।
कर्मणा व्यवहारेण सान्त्वेनादौ विमर्शित ॥ ५८५ ॥
आददीतार्थमेव तु व्याजेनाचरितेन च ।
कर्मणा स्वजविट्शूद्रान् समहीनांश्च दापयेत् ॥५८६॥
राजान स्वामिन विप्र सान्त्वेनैव प्रदापयेत् ।
रिक्थिन सुहृद वापि छलेनैव प्रसाधयेत् ॥ ५८७
वणिज कर्षकांश्चैव शिल्पिनश्चाब्रवीद्गुरु ।
देशाचारेण दाप्या स्युर्दुर्मान सपीड्य दापयेत् ५८८॥
पीडयेत्तु धनी यत्र ऋणिक न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्सम चाप्नुयाद्दमम् ॥ ५८९ ॥
यदि ह्यादावनादिष्टमशुभ कर्म कारयेत् ।
प्राप्नुयात्साहस पूर्वमृणान्मुच्येत वणिक ॥ ५९० ॥
उद्धारादिकमादाय स्वामिने न ददाति य ।
स तस्य दासो भृत्य स्त्री पशुर्वा जायते गृहे ॥ ५९१ ॥

( उपनिधि )

क्रय मोषित निक्षिप्त यन्धान्वाहितयाचितम् ।
वैश्यवृत्त्यर्पित चैव सोऽर्थस्तूपनिधि स्मृत ॥ ५९२॥
निक्षिप्त यस्य यत्किंचित्तत्प्रयत्नेन पालयेत् ।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते ॥ ५९३ ।

---

585–586 वि र pp 68 and 71 वीर० p 333 ( reads विमर्शित and कर्षकान् क्षत्र० ) remarks that कल्पतरु read कर्मणा क्षत्र०

587–588 स्मृतिच० III p 384 वि र p 69, वीर० pp 333 334 वि चि p. 21 अपरार्क p 645 ( has 587 and latter half of 588 and reads राजा तु and छलेन न च दापयेत्)

589 मिता० on या II 40 स्मृतिच० III p 388 अपरार्क p 645, परा मा III p 258 वीर० p 336

590 वि र p 71 वीर० p 339 अपरार्क p 647

591 स्मृतिच० III p 376 परा मा III p 261 व्य म p. 184 वीर० p. 357

592 अपरार्क p 662 स्मृतिच० III p 5 वि र p 84 ( reads क्रय प्रोषि तनिक्षिप्तो ), वि चि p 26

593 स्मृतिच० III 419, वीर० p 364

यस्य दोषेण यत्किंचिद्विनाश्येत ह्रियेत वा
तद् द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना ॥ ५९४॥
याचितानन्तरं नाशे दैवराजकृतेपि स ।
ग्रहीता प्रतिदाप्यः स्यान्मूल्यमात्रं न संशयः ॥५९५॥
न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्य स एव तत् ॥ ५९६ ॥
भक्षितं सोदयं दाप्य समं दाप्य उपेक्षितम् ।
किंचिन्न्यूनं प्रदाप्य स्याद् द्रव्यमज्ञाननाशितम् ॥५९७॥
अराजदैविकेनापि निक्षिप्तं यत्र नाशितम् ।
ग्रहीतु सह भाण्डेन दातुर्नष्टं तदुच्यते ॥ ५९८ ॥
ज्ञात्वा द्रव्यवियोगं तु दाता यत्र विनिक्षिपेत् ।
सर्वोपायविनाशेपि ग्रहीता नैव दाप्यते ॥ ५९९ ॥
ग्राहकस्य हि यद्दोषान्नष्टं तु ग्राहकस्य तत् ।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमाहरेत् ॥ ६०० ॥
ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।
कालहीनं दद्द्दण्डं द्विगुणं च प्रदाप्यते ॥ ६०१ ॥

---

594 अपरार्क p 663, स्मृतिच॰ III p 419, वि र p 89, वि चि. p. 24, वीर॰ p. 364

595 स्मृतिच॰ III. p 420 ( has not the words मूल्य ..संशय. ), वीर॰ p. 364 ( attributes to व्यास )

596 स्मृतिच॰ III. p 420, परा. मा III. p. 283, वीर॰ p 364, वि. र. p 89, वि. चि 26.

597 मिता॰ on या. II 67, वीर॰ p 364 ( attributes to व्यास and कात्यायन ), परा मा. III p 283 ( ascribes to व्यास ).

598 अपरार्क p. 663, स्मृतिच॰ III. p. 417, परा मा. III p 282, वि. र. p. 88, वीर॰ p. 363 ( reads राजदैविकचौरैर्वा निक्षिप्तं ).

599 स्मृतिच॰ III. p. 418, परा मा III. p. 283, वि र. 89 ( read सर्वोपाय॰ ), वीर॰ p 363

600 वि र. p 89, वि. चि. p 24 ( first half ), वि. र p. 89 has first half

601 अपरार्क p. 663, स्मृतिच॰ III p 422, परा मा III. 286, वि. र. p. 93 ( reads कालहीने ), वीर॰ p 367.

सर्वेषूपनिधिष्वेते विधयः परिकीर्तिता ॥ ६०२ ॥
यैश्च संस्क्रियते न्यासो दिवसै परिनिश्चितै. ।
तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवहृतेपि तत् ॥६०३॥
न्यासदोषाद्विनाश स्याच्छिल्पिनं तत्र दापयेत् ।
दापयेच्छिल्पिदोषात्तत्संस्कारार्थं यदर्पितम् ॥ ६०४ ॥
स्वल्पेनापि च यत्कर्म नष्टं चेत्कृतकस्य तत् ।
पर्याप्तं दिरसतस्तस्य विनश्येत्तद्गृहत ॥ ६०५ ॥
यदि तत्कार्यमुद्दिश्य काल परिनियम्य वा ।
याचितोर्थकृते तस्मिन्नप्राप्ते न तु दाप्यते ॥ ६०६ ॥
प्राप्तकाले कृते कार्ये न दद्याद्याचितोपि सन् ।
तस्मिन्नष्टे हृते वापि प्रदीाना मूल्यमाहरेत् ॥ ६०७ ॥
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं भवेत् ।
अथ कार्यविपत्तिस्तु तस्यैव स्वामिनो भवेत् ।
अप्राप्ते चै स काले तु दाप्यस्त्वर्थहृतेपि तत् ॥ ६०९॥
यो याचितकमादाय न दद्यात्प्रतियाचित ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति य ॥ ६१०॥

---

602 वि र p 92

603 604 स्मृतिच० III p 426 परा मा III p 288 वि र p 98 ( reads परिनिष्ठितै ) व्य म p 193 ( has only 603 and reads परिनिष्ठितै and दैवाद्धतेपि त ) वीर० p 370 (तदूर्ध्वं स्थापयन् शिल्पी and दैवाद्धतेपि तम् )

605 स्मृतिच० III p 427, परा मा. III p 289 ( reads शिल्पेनापि ) वीर० p 370 ( ascribes to मनु and कात्यायन ) वि र p 98

606 स्मृतिच० III p 427 परा. मा III p 289, वि र p 93, वीर० p 371

607 स्मृतिच०III p 428, परा मा p III p. 290 (reads तस्मिन्नष्टे मृते), वि चि p 24 वीर० p 371.

608 स्मृतिच० III p 427

609 स्मृतिच० III p 428 परा मा III p 290 वि र p 93 ( reads स्वकाले ) वीर० p 372.

610 अपरार्क p 664 ( reads last pāda as दण्डेन च ददाति य ), स्मृतिच० III p 429, वि र. p 93, वीर० p 372. •

अनुमार्गेण कार्येषु अन्यस्मिन्वचनान्मम ।
दद्यास्त्वमिति यो दत्त स ह्यन्वाधिरुच्यते ॥ ६११ ॥

(अस्वामिविक्रय )

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ॥ ६१२॥
अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् ।
पश्चादात्मविशुध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥६१३॥
नाधिकस्तु प्रकुर्वीत तद्धनं ज्ञातृभि स्वकम् ।
अदत्तस्यकाविक्रीतं कृत्वा स्वं लभते धनम् ॥६१४॥
प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालस्तु देयो योजनसंख्यया ॥६१५॥
प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः ॥
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥६१६॥
यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥६१७॥
असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञा न वक्तव्यः स किंचन ॥६१८॥

---

611 वि. र. p. 84.

612 मिता. on या II. 168 ( no name ), स्मृतिच० III. p. 499, परा. मा. III p 291, वि र p 104, स वि p 305 .

613 अपरार्क p 777, स्मृतिच० III p 501 ( first half ), परा. मा. III. p. 300, वि र p. 106, वीर० p. 376 ( first half )

614 अपरार्क p 777 ( reads अदत्त स्वत्त० ), स्मृतिच० III p. 502, परा. मा. III p. 294 ( first half and reads ज्ञातृभि. ), वि. र. p. 104, स. वि. p. 306, वीर० p 378.

615 मिता on या II. 170 ( cites without author's name and reads देयस्तत्राप्यसङ्ख्यया ), अपरार्क p. 776 ( reads मूल्यं वापि ), वि र p 101, व्य. म. p. 196 ( latter half )

616 अपरार्क p 777, स्मृतिच० III p 503, परा. मा III p 296 ( reads साक्षिभिर्ज्ञातिभि. ), वि र. p 106

617 अपरार्क p 776 ( reads पूर्ववादी ), स्मृतिच० III p 504, परा. मा. III. p 297 ( reads पूर्ववादी ), वि र. 101, वीर० p. 381.

618 अपरार्क p 777 ( without author's name ), मिता. on या. II. 170 ( first half without author's name ), वि. र. p. 106, स्मृतिच० III. p. 504 ( first half ).

अनुपस्थापयन्मूल्यं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥६१९॥
यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम् ।
प्रसङ्गविनिवृत्यर्थं चोरवद्दण्डमर्हति ॥६२०॥
वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥६२१॥
स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥६२२॥
अविज्ञातक्रये दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥६२३॥

(सम्भूयसमुत्थानम्)

समवेतास्तु ये केचिच्छिल्पिनो वणिजोऽपि वा ।
अविभज्य पृथग्भूताः प्राप्तं तत्र फलं समम् ॥६२४॥
भाण्डपिण्डव्ययोद्धारभारसारार्थवीक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समयेन व्यवस्थिताः ॥६२५॥
प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥६२६॥
बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
ऋणं च कारयेद्वापि सर्वैरेव कृतं भवेत् ॥६२७॥

619 मिता० on या. II 170 (cites as मनु's), वीर० p. 381, वि. र. p. 108, व्य. म. p. 197, स्मृतिच० III p. 504, परा. मा III, p. 297. All these except the मिता० ascribe to कात्या०.

620 अपरार्क 777 (ज्ञातृभिः for ज्ञातिभि०), स्मृतिच० III. p. 505, वि. र. p. 105, परा. मा. III p. 297

621–623 स्मृतिच० III pp 507, 508, परा मा III. pp. 297 and 300, वीर० p. 380, अपरार्क p. 775 ascribes these to बृहस्पति, the व्य. म p. 197 and कुल्लूक on मनु 8. 202 ascribe 621-622 to बृहस्पति.

624–625 अपरार्क p 832. स्मृतिच० III. p. 431 and परा मा. III. p. 304 ascribes 625 to नारद.

626–630 अपरार्क p 832–833. All are ascribed to बृहस्पति in वि. र. p. 128, स्मृतिच० ascribes 626, 627, 630 to बृहस्पति, व. वि. p.

ज्ञातिसंबन्धिसुहृदामृणं देयं सबन्धकम् ।
अन्येषां लग्नकोपेत लेख्यसाक्षियुतं तथा ॥६२८॥
स्वेच्छादेयं हिरण्यं तु रसा धान्यं च सावधि ।
देशस्थित्या प्रदातव्यं ग्रहीतव्यं तथैव च ॥६२९॥
समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न च याचेत य कश्चिल्लाभात्स परिहीयते ॥६३०॥
चोरत सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देय सर्वथाप्येवं विधि ॥६३१॥
शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिन ।
एकद्वित्रिचतुर्भागान्हरेयुस्ते यथोत्तरम् ॥६३२॥
परराष्ट्राद्धनं यत्स्याच्चौरै. स्वाम्याज्ञयाहृतम् ।
राज्ञे दशांशमुद्धृत्य विभजेरन्यथाविधि ॥६३३ ॥
चोराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशास्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च ॥६३४॥
तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशत ॥६३५॥
नर्तकानामेष एव धर्म. सद्भिरुदाहृत ।
तालज्ञो लभते त्वर्धं गायनास्तु समांशिन ।
प्रमुखा द्व्यंशमर्हन्ति सोयं सभूय कुर्वताम् ॥६३६॥

---

272 has 627 but cites no name, व्य म p 200 ascribes 627 to बृहस्पति परा मा III p 306 ascribes 627 and 630 to बृहस्पति

631 स्मृतिच॰ III p 433, परा मा III. p 305, वि र p 114 ( सर्वेष्वेषु ), स वि p 278

632 अपरार्क p 838, स्मृतिच॰ III p 435, परा मा III p 310 (reads शिल्पाकशिक्षकुशला and यथांशत ), वि र p 124, स वि p 278, वीर॰ p. 390.

633-64 परा मा III p 311, स्मृतिच॰ III p 440 वि र pp 125-126, वीर॰ p 391, स वि p 276 ( only verse 633 )

635 स्मृतिच॰ III. p 441, परा मा III p 311, स वि p 276, व्य. म. p 200, वीर॰ p 391, वि र. p 126 (reads तस्य कार्या समा क्रिया)

636 परा. मा. III p 312, अपरार्क ascribes first two half lines to बृहस्पति and so do वि र. p 125, वीर॰ p 391, स वि p. 276.

वणिजां कर्षकाणां च चोराणां शिल्पिनां तथा।
अनियम्याशकर्तृणां सर्वेषामेव निर्णयः ॥६३७॥

( दत्तानपाकर्म दत्ताप्रदानिकं वा )

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत् ॥६३८॥
आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः ।६३९॥
सर्वस्वगृहवर्जं तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोन्यथा ॥६४०॥
भतश्च सुतदाराणां वशित्वं त्वनुशासने।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥६४१।
स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥६४२॥
प्रतिश्रुतस्यादानेन दत्तस्याच्छादनेन च ।
कल्पकोटिशतं मर्त्यस्तिर्यग्योनौ च जायते ॥६४३॥
अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम् ।
उपलब्धिक्रियालब्धा सा भृतिः परिकीर्तिता ॥६४४॥

---

637 परा मा III p 312 वि र p 126 व्य म p 201, वीर० p 391, स्मृतिच० III p 441

638-639 अपरार्क p 779 परा मा III p 315 ( आत्मन्येव ) वि. र p 128, and वि चि p 38 ( both read आत्मन्येव ) स्मृतिच० III pp 445 446

640 स्मृतिच० III p 445 परा मा III p 214 वि र p 129 वि चि p 37 स वि p 283 वीर० p 395 All except स्मृतिच० read सर्वस्व गृहवर्जं

परा मा III p 315 स्मृतिच० III p 445 ( as स्मृत्यन्तर )

स्मृतिच० III p 449 वि र p 132 व्य म p 203 वीर० p. 397 स वि p 285

स वि p 285 वि र p 132 ascribes a closely similar verse to हारीत

स्मृतिच० III p 449 अपरार्क p 781 वि. र p 184, वीर० p. 397

ज्ञातिसंबन्धिसुहृदामृणं देयं सबन्धकम् ।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा ॥६५८॥
स्वेच्छादेयं हिरण्यं तु रसा धान्यं च सावधि ।
देशस्थित्या प्रदातव्यं ग्रहीतव्यं तथैव च ॥६२९॥
समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न च याचेत यः कश्चिल्लाभात्स परिहीयते ॥६३०॥
चोरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥६३१॥
शिक्षकाभिज्ञकुशला आचार्यश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान्हरेयुस्ते यथोत्तरम् ॥६३२॥
परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञयाहृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन्यथाविधि ॥६३३ ॥
चोराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च ॥६३४॥
तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥६३५॥
नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभते त्वर्धं गायनास्तु समांशिनः ।
प्रमुखा ह्यर्धशामर्हन्ति सोयं संभूय कुर्वताम् ॥६३६॥

---

272 has 627 but cites no name, व्य. म. p. 200 ascribes 627 to बृहस्पति परा. मा. III. p 306 ascribes 627 and 630 to बृहस्पति

631 स्मृतिच॰ III p. 433, परा. मा III p. 305, वि र. p.114 ( सर्व- द्रव्येष्वयं ), स वि. p 273

632 अपरार्क p. 838, स्मृतिच॰ III p 435, परा मा. III p 310 (reads शिल्पाकरस्तुकुशला and यथांशतः ), वि र p 124, स. वि. p. 273, वीर॰ p. 390.

633-34 परा मा. III p 311, स्मृतिच॰ III p 440, वि र pp 125-126, वीर॰ p 391, स. वि p 276 ( only verse 633 )

635 स्मृतिच॰ III. p 441, परा मा III p 311, स. वि p 276, व्य. म. p. 200, वीर॰ p 391, वि र. p 126 (reads तस्य कार्या समा क्रिया).

636 परा. मा. III. p. 312, अपरार्क ascribes first two half lines to बृहस्पति and so do वि र. p. 125, वीर॰ p. 391, स. वि p. 276,

वणिजां कर्षकाणां च चोराणां शिल्पिनां तथा।
अनियम्याशकर्तृणां सर्वेषामेव निर्णयः ॥६३७॥

( दत्तानपाकर्म दत्ताप्रदानिकं वा )

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत् ॥६३८॥
आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः ।६३९।
सर्वस्वगृहवर्जं तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥६४०
अतश्च सुतदाराणां वशित्वं त्वनुशासने।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥६४१।
स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥६४२॥
प्रतिश्रुतस्यादानेन दत्तस्याच्छादनेन च ।
कल्पकोटिशतं मर्त्यस्तिर्यग्योनौ च जायते ॥६४३॥
अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम्।
उपलब्धिक्रियालब्धा सा भृतिः परिकीर्तिता ॥६४४।

---

637 परा मा, III p 312 वि र p 126 व्य म p 201, वीर० p 391, स्मृतिच० III p 441

638-639 अपरार्क p 779 परा मा III p 315 ( आत्मयेव ) वि र p 128 and वि चि p 36 ( both read आत्मन्येव ) स्मृतिच० III pp 445 446

640 स्मृतिच० III p 445 परा मा III p 214 वि र p 129 वि चि p 37 स वि p 283 वीर० p 395 All except स्मृतिच० read सर्वस्वं गृहवर्जं

641 परा मा III p 315 स्मृतिच० III p 445 ( as स्मृत्यन्तरं )

642 स्मृतिच० III p 449 वि र p 132 व्य म p. 203 वीर० p. 397 स वि p 285

643 स वि p 285 वि र p 132 ascribes a closely similar verse to हारीत

644 स्मृतिच० III p 449 अपरार्क p 781 वि र p 134 वीर० p. 397

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनात् ।
अनेन विधिना लब्धं विद्यात्प्रत्युपकारतः ॥६४५॥
प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेपि न तथा भवेत् ॥६४६॥
कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहासाच्च यद्दत्तं तत्पुनर्हरेत् ॥६४७॥
या तु कार्यस्य सिद्ध्यर्थमुत्कोचा स्यात्प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेर्थे न देया स्यात्कथंचन ॥६४८॥
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्तथा बलात्
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः ॥६४९॥
स्तेनसाहसिकोद्वृत्तपारजायिकशंसनात् ।
दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्तनात् ॥६५०॥
प्राप्तमेतैस्तु यत्किंचित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक् ॥६५१॥
नियुक्तो यस्तु कार्येषु स चेदुत्कोचमाप्नुयात् ।
स दाप्यस्तद्धनं कृत्स्नं दमश्चैकादशाधिकम् ॥६५२॥
अनियुक्तस्तु कार्यार्थमुत्कोचं यमवाप्नुयात् ।
कृतप्रत्युपकारार्थस्तस्य दोषो न विद्यते ॥६५३॥

---

645 अपरार्क p. 781 ( reads प्रत्युपकारकम्), स्मृतिच॰ III. p. 450, वि. र. p. 184, वीर॰ p 398 ( reads भयत्राणोपरक्षा॰ and लब्धं भयत्राणादिक पनम् ).

646 अपरार्क p. 781, स्मृतिच॰ III. 450, वि. र. p. 184.

647–649 अपरार्क pp. 781-782, स्मृतिच॰ III. p 452, परा. मा. III. p. 319, वि. र. p. 135-136, व्य. म. p. 205 ( reads यस्तु and उत्कोचः), वीर॰ p. 399.

650–651 अपरार्क p. 782 ( reads पारजायिक॰ and धृतनष्टस्य ), स्मृतिच॰ III. p. 452, परा. मा. III. p. 320 ( reads पारदारिकसंगमात् ), वि. र. 137 ( reads पारदारिक॰ ), स. वि. p. 286 (reads पारदारिक॰ and and धृतनष्टस्य ), वीर॰ pp. 399-400, व्य म. p. 205.

652–653 स. वि. p. 286.

स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥६५४॥
योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥६५५॥
भृतावनिश्चितायां तु दशभागमवाप्नुयात् ।
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः ॥ ६५६ ॥

(वेतनस्यानपाकर्म)

कर्मारम्भं तु यः कृत्वा सिद्धं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन्दण्डमर्हति ॥६५७॥
विघ्नयन्वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम् ॥६५८॥
न तु दाप्यो हृतं चोरैर्दग्धमूढं जलेन वा ॥६५९॥
त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥६६०॥
यदा तु पथि तद्भाण्डमाक्षिप्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतीं भृतिम् ॥६६१॥

---

654 अपरार्क p 782, स्मृतिच० III. p. 453, मिता on या. II. 176, परा. मा. III p. 820, स. वि. p. 287,

655 अपरार्क p. 783, स वि. p. 287 ascribes to नारद; स्मृतिच० III. p 454, वीर० p. 400 and परा. मा. III. p. 820 ascribe to मनु ( it is मनु 8. 165 )

656 स. वि. p. 298.

657 स्मृतिच० III. p. 478, परा. मा III. p 825 ( reads सर्वं for सिद्धं ), वि. र. p. 160 ( सर्वं ), स वि p 299, वीर० p. 416 (reads सिद्धिं).

658 स्मृतिच० III p. 475 ( reads द्विगुण स्मृतं ), परा. मा. III. p. 827, वीर० p. 418

659 स. वि. p. 300, अपरार्क p 799, स्मृतिच० III. p. 475 and वीर० p. 418 (ascribes to वृद्धमनु)

660 स्मृतिच० III. p 477, अपरार्क p 800, परा. मा III p. 832, वि. र. p. 165, वीर० p 421

661 स्मृतिच० III. p 478, परा मा III. p. 329, वि र. p. 164, वि. चि. p. 50, वीर० p 419.

हस्त्यश्वगोखरोष्ट्रादीन्गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यार्थं स तु दाप्य सभाटकम् ॥६६२॥
गृहवार्यापणादीनि गृहीत्वा भाटकेन य ।
स्वामिने नार्पयेद्यावत्तावद्दाप्य सभाटकम् ।६६३।

(स्वामिपालविवाद )

क्षेत्रारामविवीतेषु गृहेषु पशुपालिषु ।
ग्रहण तत्प्रविष्टानां ताडन वा बृहस्पति ॥६६४॥
अधमोत्तममध्यानां पशूना चैव ताडन ।
स्वामी तु विवदेयुस्तत्र दण्ड तत्र प्रकल्पयेत् ॥६६५॥
अजातेष्वेव सस्येषु कुर्यादावरण महत् ।
दुःखेनेह निवार्यन्ते लब्धस्वादुरसा मृगा ॥६६६॥
दापयेत्पणपाद गा द्वौ पादा माहिषीं तथा ।
तथाजाविकवत्सानां पादो दण्ड प्रकीर्तित ॥६६७॥

( समयस्यानपाकर्म संविद्व्यतिक्रमो वा )

समूहिता तु यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्यु सर्वकर्माणि स्वधर्मेषु व्यवस्थिता ॥ ६६८ ॥
अविरोधेन धर्मस्य निर्गत राजशासनम् ।
तस्यैवाचरण पूर्वं कर्तव्य तु नृपाज्ञया ॥ ६६९ ॥
राजप्रवर्तितान्धर्मान्यो नरो नानुपालयेत् ।
गर्ह्य स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥६७०॥

---

662–663 स्मृतिच० III p 479 परा मा III pp 330 31, वि र pp 168 169 अपरार्क p. 801 ( 663 only ) वीर० p 420

664 स्मृतिच० III p 487, वि र p 241 वि चि p 69

665 स्मृतिच० p 488, अपरार्क p 672, वि र p 241 वि चि p 69

666 स्मृतिच० III p 488 अपरार्क p 770 परा मा III p 378 वीर० p 446

667 स्मृतिच० III p 494 ( first half ) वि र p 235, वि चि p 67

668 स्मृतिच० III, p 525 वि र p 180 and वीर० p 426 ( read समूहानां ) परा मा III p 303 ( also समूहानां )

669–670 स्मृतिच० III pp 525 526 वि र p 181 वीर० p 426

युक्तियुक्तं च यो हन्याद्धकुर्योऽनवकाशदः ।
अयुक्तं चैव यो ब्रूते स दाप्यः पूर्वसाहसम् ॥ ६७१ ॥
साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विख्याप्यैवं नृपे भृगुः ॥ ६७२ ॥
एकपात्रे च वा पङ्क्त्यां संभोक्ता यस्य यो भवेत् ।
अकुर्वंस्तत्तथा दण्ड्यस्तस्य दोषमदर्शयन् ॥ ६७३ ॥
गणमुद्दिश्य यत्किंचिद्दृणं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥ ६७४ ॥
गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशा सर्व एव ते ॥ ६७५ ॥
तथैव भोज्यवैभाज्यदानधर्मक्रियासु च ।
समूहस्थोंऽशभागी स्यात्प्रगतस्त्वंशभाङ्न तु ॥६७६॥
यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ।
राजप्रसादलब्धं च सर्वेषामेव तत्समम् ॥ ६७७ ॥

(नैगमादिशब्दलक्षणम्)

नानापौरसमूहस्तु नैगमः परिकीर्तितः ।
नानायुधधरा व्राता समवेताः प्रकीर्तिताः ॥ ६७८ ॥

---

671 अपरार्क p 795, स्मृतिच॰ III p 527, परा मा III p 354 (हन्यादः कार्यानवकाशद॰), वीर॰ p 428, वि र p. 179

672 अपरार्क p 693, स्मृतिच॰ III p. 530 (reads नृपेऽर्पयेत् and notices the reading नृपे भृगु॰), वि र p 183, वीर॰ p. 428.

673 अपरार्क p 794, वि र p 185, वि चि. p. 54, स. वि p 330 (reads पङ्क्त्या वा न भोक्ता येन यो भवेत् । अकुर्वन् स तथा ).

674 अपरार्क p 795 ( reads ये कैश्चित् ), स्मृतिच॰ III p. 533, परा. मा. III p 359, स वि. p 131 वि र p 187, वि चि. 55.

675-676 अपरार्क p 795 ( reads भोज्य वैभाज्यं धन ), स्मृतिच॰ III p 533 ( reads गणिनां शिल्पिवर्गाणां and वैभव्य ), परा मा III, pp. 359-360 ( reads प्राक्तनस्याधमर्णस्य, भोजनैर्भाव्यं and प्रगतस्त्वंशभागभाक् ), वि. र. pp 187-188, वीर॰ p. 432 ( reads वैभव्य and प्रागत॰ )

677 स. वि p. 330.

678-682 वि र pp. 668 669, स्मृतिच॰ III p. 524 and वीर॰ p. 426 and परा मा III p. 352 have latter half of 678 and first

समूहो वणिजादीनां पूग॰ संपरिकीर्तितः ।
प्रवज्यावसिता ये तु पाषण्डा॰ परिकीर्तिताः ॥ ६७९ ॥
ब्राह्मणानां समूहस्तु गणः संपरिकीर्तितः ।
शिल्पोपजीविनो ये तु शिल्पिन॰ परिकीर्तिताः ॥६८०॥
आर्हतसौगतानां तु समूह सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥ ६८१ ॥
गणपाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः ॥ ६८२॥

( क्रयविक्रयानुशयः क्रीत्वानुशयो विक्रीय संप्रदानं वा)

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशमं भागं दत्त्वा स्वद्रव्यमाप्नुयात् ॥ ६८३ ॥
अप्राप्तेऽर्थक्रियाकाले क्षते नैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु ॥ ६८४ ॥
भूमेर्दशाहे विक्रेतुरायस्तत्क्रेतुरेव च ।
द्वादशाहः सपिण्डानामपि चाप्यमत परम् ॥ ६८५ ॥
क्रीत्वानुशयवान्पण्यं त्यजेद्दोषादि यो नरः ।
अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥ ६८६ ॥
क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद्बुध ॥६८७॥
अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं काले चेदन्यथा न तु ॥ ६८८ ॥

---

half of 680 ( they read कुलानां हि समूहस्तु ). स्मृतिच॰ III p. 40 has 682, latter half of 678 and first half of 680.

683-684 स्मृतिच॰ III. p 511, वि र pp 191-192, परा मा. III. p 367, स. वि p 310 (reads दशाहं तु), वि चि 56 (अप्राप्तेर्थे क्रियाकारे), वीर॰ p. 439 (अप्राप्तेऽथ क्रियाकाले ), वि. र also reads अप्राप्तेर्थे क्रियाकारे.

685 परा. मा. III. p. 364

686 स्मृतिच॰ III. p 512, वि. र p 197, स वि p 311 ( क्रीत्वाप्यनुशयात् ), वीर॰ p 435 ( reads क्रीत्वा चानुशयं पश्चात्यजेद्दोषाद्दते)

687 स्मृतिच॰ III. p 512, वि. र. p 197 ( reads त्यजेद्बुधः ), वीर॰ p. 435.

688 स्मृतिच॰ III. p 518, परा मा. III p 361, वि. र p 199 ( reads देयं पण्यं कालेऽन्यथा न तु ), व्य म p 217, वीर॰ p 438

निर्दोषं दर्शयित्वा तु यः सदोषं प्रयच्छति ।
मूल्यं तद् द्विगुणं दाप्यो विनयं तावदेव च ॥६८९॥
उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः ।६९०॥
दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी ।
विक्रीतं च तदन्यत्र विक्रेता नापराध्नुयात् ॥६९१॥
मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मुग्धेन त्याज्यं तस्य पुनर्भवेत् ॥६९२॥
त्र्यहं दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥६९३॥
द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥६९४॥
अतोऽर्वाक्पण्यदोषस्तु यदि संजायते क्वचित्
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ॥६९५॥
परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥६९६॥
साधारणं तु यत्क्रीतं नैको दद्यात्सराधमः ।
नादद्याच्च गृह्णीयाद्विक्रीयाच्च न चैव हि ॥६९७॥
क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यवीक्षितम् ॥६९८॥

---

689 690 स वि p 311

691 स वि p 311 वि चि p 57 ( no name cited )

692 स वि p 312 वीर० 441 and वि चि p 57 ascribe to बृहस्पति

693 695 स वि p 316 वि र p 199 ascribes first two to नारद and third to बृहस्पति वि चि p 57 ascribes first two to व्यास and नारद and the third ( p 58 ) to बृहस्पति परा मा III p 361 ascribes all three to व्य म and वीर० p 433 ascribes all to नारद The first two verses are Nārada 12 5-6

696 स वि p 317 परा मा p 364 and व्य म p 217 ascribe it to नारद ( it is नारद 12 7 )

697-699 स वि p 317 परा म III p 363 ascribes 698 to नारद

द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्र्यंशांशमाहरेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥६९९॥
द्रव्यस्वं पञ्चधा कृत्वा विभागो मूल्यमुच्यते ।
लाभश्चतुर्थो भागः स्यात् पञ्चमः सत्यमुच्यते ॥७०० ॥
सान्धिश्च परिग्राहिश्च विषमा वा विभागतः ।
आक्षयापि क्रयश्चापि दशाब्दं विनिवर्तयेत् ॥७०१॥
ज्ञात्यादीनननुज्ञाप्य समीपस्थाननिन्दितान् ।
क्रयविक्रयधर्मोऽपि भूमेर्नास्तीति निर्णयः ॥७०२॥
स्वग्रामे दशरात्रं स्यादन्यग्रामे त्रिपक्षकम् ।
राष्ट्रान्तरेषु षण्मासं भाषाभेदे तु वत्सरम् ॥ ७०३ ॥
पलायिते तु करदे करप्रतिभुवा सह ।
करार्थं करदक्षेत्रं विक्रीणीयुः समासदः ॥७०४॥
समवेतैस्तु सामन्तैरभिज्ञैः पापभीरुभिः ।
क्षेत्रारामगृहादीनां द्विपदां च चतुष्पदाम् ॥७०५॥
कल्पितं मूल्यमित्याहुर्भागं कृत्वा तदष्टधा ।
एकभागातिरिक्तं वा हीनं वानुचितं स्मृतम् ॥७०६॥
समाः शतमतीतेऽपि सर्वं तद्विनिवर्तते ।
क्रयविक्रयणे क्रय्यं यन्मूल्यं धर्मतोऽर्हति ॥७०७॥
तत्तुर्ये पञ्चमे षष्ठे सप्तमेऽष्टमेऽपि वा ।
हीनो(ने)यदि विनिर्वृत्ते क्रयविक्रयणे सति ॥७०८॥
हीनमूल्यं तु तत्सर्वं कृतमप्यकृतं भवेत् ॥
उत्कादल्पतरे हीने क्रये(यो?) नैव प्रदुष्यति ॥७०९॥
तेनाप्यंशेन हीयेत मूल्यतः क्रयविक्रये ।
कृतमप्यकृतं प्राहुरन्ये धर्मविदो जनाः ॥७१०॥

---

( 1b ib नारद 12 2 )
700 स. वि p. 318
701 स वि. p 320
702–703 स. वि p 322
704 स. वि p 324
705–706 स वि p 325
707–710 स. वि. pp. 325-26

अर्घाधिके क्रये सिध्येदुत्कर्षो द्व्याधिक(द्विक) ।
अपक्रयविभागेन [भोगेन] सद्य एव न विक्रये ॥७११॥
मूल्यात्स्वल्पप्रदानेऽपि क्रयसिद्धिः कृता भवेत् ।
चक्रवृद्ध्या प्रदातव्यं शेषं तत्समयादृते ॥७१२॥

(अभ्युपेत्याशुश्रूषा)

यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥७१३॥
शिक्षितोऽपि कृतं काममन्तेवासी समाचरेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥७१४॥
स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः
त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ॥७१५॥
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ॥७१६॥
समवर्णेऽपि विप्रे तु दासत्वं नैव कारयेत् ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥७१७॥
क्षत्रविट्शूद्रधर्मस्तु समवर्णो कथञ्चन ।
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः ॥७१८॥

---

711 स वि p 326
712 स वि p. 327
713 अपरार्क p 790 स्मृतिच॰ III p 457, परा मा III p 338, वि र p. 141, वीर॰ p 403, स वि p 290
714 स वि p 290, स्मृतिच॰ III. p. 457 ( शिक्षितोऽपि कृत कालमन्ते॰ ); वीर॰ p 408 ascribes to नारद and reads as स्मृतिच॰ does
715 अपरार्क p 788, स्मृतिच॰ III. p 460, वि र p 152 व्य. म PP 206 207, वीर॰ p. 405
716 अपरार्क p 788 स्मृतिच॰ III p 461 ( वर्णकमात्तु॰ ) परा मा. III p 341 वि र p 152 स वि p 296 (reads the lines त्रिषु वर्णेषु and वर्णानामनु॰ as one verse )
717–718 अपरार्क p 789 ( puts verse 718 between the two halves of 717 ) स्मृतिच॰ III pp 461 62 ( reads समवर्णेऽपि ), परा मा III p 342 ( reads अवर्णे तु विप्रस्य and तुल्यपदसमस्य ) वि र p 152 ( order like that in अपरार्क ) व्य म p 207 and वीर॰ p 407 ( omit the line ब्राह्मणस्य हि &c. )

शीलाध्ययनसंपन्ने बहून् कर्म कामतः ।
तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तमः ॥७१९॥
विण्मूत्रोन्मार्जनं चैव नग्नत्वपरिमर्दनम् ।
प्रायो दासीसुता कुर्युर्गवादिग्रहणं च यत् ॥७२०॥
प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजादयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविट् नृपः ॥७२१॥
शूद्रं तु कारयेद्दासं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्ट स स्वयमेव स्वयम्भुवा ॥७२२॥
स्वदासीं यस्तु संगच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्या स्याद्दासी सान्वया तु सा ॥७२३॥
दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः ।
प्रकाशं विक्रयाद्यत्तु न स्वामी धनमर्हति ॥७२४॥
दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥७२५॥
आदद्याद् ब्राह्मणीं यस्तु विनीणीत तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥७२६॥

---

719 स्मृतिच॰ III 461, वि र p 152 वि चि p 47

720 वि. र p 144

721 अपरार्क p 787, स्मृतिच॰ III. p 466 ( reads क्षत्रविट्शूद्र° ), परा मा III p. 345 ( दासत्व क्षत्रिय विश ) स वि p 293, वि चि pp 43-44 व्य म 207 (क्षत्रिय शूद्र) वीर॰ p 406 ( °विट् शूद्र )

722 स वि p 296 This is मनु 8 413 ( which reads ब्राह्मणस्य स्वयम्भुवा )

723 स्मृतिच॰ III. p 468 (स्याच्च दासी) वि र p 148, व्य म p. 210, वीर॰ p 412.

724 स्मृतिच॰ III p 469 ( first half ), वि र p. 150 वि चि p 46 ( reads प्रसादविक्रयात्तु ) व्य म p 211 and वीर॰ 413 ( first half only )

725 स्मृतिच॰ III p 469 स वि p 194 ( यस्तद्भर्ता and प्रभुस्तयो ), वि चि 46, व्य म p 211, वीर॰ p 412.

726-729 अपरार्क p 789 ( reads ब्रह्मदासीं for अदासी च and भक्तदासीं )

कामात्तु संश्रिता यस्तु दासीं कुर्यात्कुलस्त्रियम् ।
सङ्क्रामयेत यान्यत्र दण्ड्यस्तत्राकृत भवेत् ॥ ७२७॥
बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥७२८॥
विक्रोशमाना यो भक्ता दासीं विक्रेतुमिच्छति ।
अनापदिस्थ शक्त सन्मा,याद् द्विशत,दमम् ॥७२९॥
तथाहमिति चात्मान योऽस्वतन्त्र प्रयच्छति ।
न स त प्राप्नुयात्काम पूर्वस्वामी लभेत तम् ॥७३०॥
प्रव्रज्यावसितो दासो मोक्तव्यश्च न केनचित् ।
अनाकालभृतो दास्यान्मुच्यते गोयुग ददत् ॥७३१॥

( सीमाविवाद )

आधिक्य न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्ति सीमा च षट् भूवादस्य हेतवः ॥७३२॥
तस्मिन्भोग प्रयोक्तव्य सर्वसाक्षिषु तिष्ठति ।
लेख्यारूढश्चोत्तरश्च साक्षी मार्गद्वयान्वितः ॥७३३॥
क्षेत्रवास्तुतडागेषु कूपोपवनसेतुषु ।
द्वयोर्विवादे सामन्त प्रत्यय सर्ववस्तुषु ॥७३४॥
सामन्तभावेऽसामन्तैः कुर्यात्क्षेत्रादिनिर्णयम् ।

---

वि र p 164 165 ( reads भुक्ता for भक्ता ) वि चि 47, व्य म p 203, वीर॰ p 413.

780 स वि p 294, वि चि p 44 (no name) वीर॰ p 411 (ascribes to नारद )

781 स वि p 293 The two halves seem to be parts of different verses

782 मिता॰ on या II 150 स्मृतिच॰ III p 544 वि र p 201 (अभोगे भुक्तिः), वीर॰ p. 451, अपरार्क p 759

783 अपरार्क p 759 वि र p 205 ( स च साक्षिषु ).

784 वि र p. 207

785 अपरार्क p 760 वीर॰ p 456 (समन्तभावे सामन्तैः), व्य. म. III. p.897 ( reads सीमान्तवासिभिर्वा तैः ).

ग्रामसीमासु च तथा तद्वन्नगरदेशयो ॥७३५॥
ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि ॥७३६॥
तेषामभावे सामन्तमौलवृद्धोऽभृतादय ।
स्थावरे षट्प्रकारेऽपि नात्र कार्या विचारणा ॥७३७॥
ससक्तास्त्वथ सामन्तास्तत्संसक्तास्तथोत्तरा ।
ससक्तसक्तससक्ता पद्माकारा प्रकीर्तिता ॥७३८॥
स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्ससक्तैस्तु कर्तव्य उद्धारो नात्र सशय ॥७३९॥
ससक्तसकदोषे तु तत्ससक्ता प्रकीर्तिता ।
कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।७४०॥
नाशानेन हि मुच्यन्ते सामन्ता निर्णयं प्रति ।
नाशानोक्तौ दण्डयित्वा पुन सीमा विचारयेत् ।
कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् ॥७४१॥
त्यक्त्वा दुष्टस्तु सामन्तानन्यान्मौलादिभि सह ।
समीक्ष्य कारयेत्सीमामेव धर्मविदो विदुः ॥७४२॥

736 स्मृतिच० III p 545 वि र p 207, अपरार्क p 759 वीर० p. 454

737 मिता० on या II 152, स्मृतिच० III. p. 545, वि र. p 206, वि चि p 61, वीर० p 456

738 मिता० on या II, 152 अपरार्क p 760, स्मृतिच० III, pp 537 538, परा मा III, p. 389, वि र p 213 ( reads ससक्तास्ता ).

739-740 मिता० on या II 152 अपरार्क p 760 (reads तत्ससक्तैस्तु कर्तव्य) स्मृतिच० III p 538 ( omits latter half of 740 ) वीर० pp 454 55, वि र p 207

741 मिता० on या II 153 अपरार्क p 763 वीर० 460 ( the two latter halves only ) परा मा III pp 397 398 ( two latter halves ) वि र p. 212

742 मिता० on या II 153 अपरार्क p. 760 परा मा III p. 398, ( समीक्ष्य for समिक्ष्य ) स्मृतिच० III, p 538 ( reads समस्यं ) वि र. 208 ( reads समस्य ), वीर० p. 455

ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः सम्प्रकीर्तिताः ॥७४३॥
निष्पाद्यमानं यैर्दृष्टं तत्कार्यं सुगुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते वृद्धाः परिकीर्तिताः ॥७४४॥
उपश्रवणसंभोगकार्याख्यानोपचिह्निताः ।
उद्धरन्ति ततो यस्मादुद्धृतास्ते ततः स्मृताः ॥७४५॥
सामन्ताः साधनं पूर्वमनिर्णीते गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेया ततोऽन्ये त्रिगुणा मताः ॥७४६॥
एको यद्व्रजयेत्सीमामुभयोरीप्सितः क्वचित् ।
मस्तके क्षितिमारोप्य रक्तवासाः समाहितः ॥७४७॥
भयवर्जितभूपेन सर्वाभावे स्वयंकृता ॥७४८॥
क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रासादावसथनृपदेवगृहेषु च ॥७४९॥
बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥७५०॥
सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥७५१॥

---

743–745 मिता॰ on या II 151 ( तद्गुणान्वितैः ) अपरार्क p 759–760 स्मृतिच॰ III p 539, परा मा III p 390, स वि p 334, वीर॰ p 455

746 मिता॰ on या II 152 (निर्दोषाः स्वगुणाः॰), अपरार्क p 760, स्मृतिच॰ III p 540 वि र p 208 वीर॰ p 456 ( ascribes to मनु )

747 अपरार्क p 762

748 वि र p 216

749 मिता॰ on या II 154 वि र p 218, वीर॰ p 457

750 मिता॰ on या II 152 अपरार्क p 763 परा मा III p 397 स्मृतिच॰ III p 546, व्य म p 222 वीर॰ p 460

751 मिता॰ on या II 152 अपरार्क p 763, स्मृतिच॰ III p 543 व्य म p 222 वीर॰ p 458.

मेखलाभ्रमनिष्कासगवाक्षांश्चोपरोधयेत् ।
प्रणालीं गृहवास्तुं च पीडयन्दण्डमाग्भवेत् ॥७५२॥
निवेशासमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मसु ॥७५३॥
विण्मूत्रोदकवहं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥७५४॥
सर्वे जना सदा येन प्रयान्ति स चतुष्पथ ।
अनिरुद्धो यथाकालं राजमार्गः स उच्यते ॥७५५॥
न तत्र रोपयेत्किञ्चिन्नोपहन्यात्तु केनचित् ।
गुर्वाचार्यनृपादीनां मार्गादानात्तु दण्डभाक् ॥७५६॥
यस्तत्र संकरश्वभ्रान्वृक्षारोपणमेव च ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषक ॥७५७॥
तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥७५८॥
दूषयेत्सद्गतीर्थानि स्थापितानि महात्मभिः ।
पुण्यानि पावनीयानि प्राप्नुयात्पूर्वसाहसम् ॥७५९॥

---

752–753 अपरार्क pp 764–765, वि र p 219 (omits the line निवेश॰), व्य म p 223, वीर॰ p 463 स्मृतिच॰ III p 551 has 753 and reads दृष्टिप्राप्त

754 अपरार्क p 765 (चक्र च) स्मृतिच॰ III p 551, परा मा III p 400 (reads श्वक्र च) वि र p 220 (चक्र च), व्य म p 224, वीर॰ p 464

755 स्मृतिच॰ III p 552, वि र p 221 (reads जनपदा and यथाकाम), व्य म p 224, वीर॰ p 464 (अनिषिद्धा)

756–757 वि र 221, अपरार्क p 765 and परा मा p 401 ascribe 757 to बृहस्पति

758–759 स्मृतिच॰ III p. 553, अपरार्क p 765, वि र p 222 (reads आयानि शापनीयानि), परा मा III p 402, व्य म p 225, वीर॰ p. 465,

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥७६०॥
अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंश्रिता ॥
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संश्रिताः ॥७६१॥
अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतडाकानां संस्कर्ता लभते न तु ॥७६२॥
व्ययं स्वामिनि चायाते न निवेद्य नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तद्दत्तं लभते व्ययम् ॥७६३॥
अशक्तितो न दद्याच्चेत् खिलार्थो परकृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् ॥७६४॥
अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥७६५॥
विकृष्यमाणे क्षेत्रे च क्षेत्रिकः पुनरागतेत् ।
खिलोपचारं(खिलोपचारं?) तत्सर्वं दत्त्वा क्षेत्रमवाप्नुयात्॥७६६॥
तदष्टभागापचयाद् यावत्सप्त गताः समाः ।
समासेऽष्टमे वर्षे भुक्तक्षेत्रं लभेत सः ॥७६७॥

( वाक्पारुष्यम् )

हुङ्कारः कासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद् वाक्पारुष्यं तदुच्यते ॥७६८॥

---

760-761 अपरार्क p 766 (reads संस्थिताः for संश्रिताः in both lines), स्मृतिच० III p 555, परा मा. III. p. 404, वि र. p. 223, व्य म. p 225, वीर० p 417 (reads यस्य क्षेत्रस्य)

762-763 अपरार्क p. 767 (reads देयं स्वामिनि and लभते फलम्), स्मृतिच० III. p 558, वि र p. 225 (reads देयं स्वामिनि), परा. मा. III. p 407, स वि p 340 (has only 762)

764 अपरार्क p 763 (reads खिलार्थं च कृत व्यय and कर्षकात्फल०), स्मृतिच० III. 560, परा मा. III. p 409, वि चि p 65, वीर० p. 470, स. वि p. 340

765-767 स. वि. p. 340 परा. मा. (III. pp. 408-409) and स्मृतिच० III. p. 560 ascribe 765-766 to नारद.

768 अपरार्क p. 805, स्मृतिच० III. p. 18.

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्
आक्षेपो निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंज्ञितम् ।
पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः ॥७६९॥
यस्त्वसत्संज्ञितैरङ्गैः परमाक्षिपति क्वचित् ।
अभूतैर्वाथ भूतैर्वा निष्ठुरा वाक्स्मृता बुधैः ॥७७०॥
न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलादीनामश्लीला सा बुधैः स्मृता ॥७७१॥
महापातकयोक्त्री च रागद्वेषकरी च या ।
जातिभ्रंशकरी याथ तीव्रा सा प्रथिता तु वाक् ॥७७२॥
योऽगुणान्कीर्तयेत्क्रोधान्निर्गुणे वा गुणवताम् ।
अन्यसंधानुयोगी वा वाग्दुष्टं तं नरं विदुः ॥७७३॥
अदुष्टस्यैव यो दोषान्कीर्तयेद्दोषकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥७७४॥
मोहात् प्रमादात्सङ्घर्षात् प्रीत्या चोक्तं मयेति यत् ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥७७५॥
यत्र स्यात्परिहारार्थं पतितस्तेन ( पतितत्वेन ? ) कीर्तनम् ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥७७६॥
अन्यथा तुल्यदोषः स्यान्मिथ्योक्तौ नूत्तमः स्मृतः ॥ ७७७ ॥

---

769 अपरार्क p. 805.

770–772 अपरार्क pp. 805–806 (reads न्यग्भावगुरुणं and रागद्वेष॰ for राग-द्वेष॰), स्मृतिच॰ III. pp. 12-13 (reads अङ्गैः and वृत्तदेश॰), परा. मा. III, p. 429 ( reads परस्याक्षिपति, अभूतैर्वाथ भूतैर्वा and वृत्तदेश॰ ) वि. र. p. 243 ( reads न्यग्भावगुरुणं वाचा ), वीर॰ p. 482.

773 वि. र. p. 244 and वीर॰ p. 484 ( reads अन्यसंज्ञानियोगी ).

774 वि. र. p. 245 ; स्मृतिच॰ III. p. 760 ascribes to नारद (and reads दुष्टस्यैव तु ).

775 वि. र. p. 246 and वि. चि. p. 70 (ascribe to उशनस् and कात्यायन) स्मृतिच॰ III; p. 759 and व्य. म. p. 229 ascribe to उशनस्.

776 स्मृतिच॰ III. p. 760, वि. र. p. 258, वीर॰ p. 484.

777 वि. p. 258.

महता प्रणिधानेन यागुष्टं साधयेत्परम् ।
अतथ्यं भावितं राज्ञा प्रयत्नेन विचारयेत् ॥
अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम् ॥७७८॥

( दण्डपारुष्यम् )

इत्यादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम् ।
तत्र साक्षिकृतं चैव दिव्यं वा विनियोजयेत् ॥७७९॥
आमीपणेन दण्डेन प्रहरेद्यस्तु मानवः ।
पूर्वं चापीडितो वाथ स दण्ड्यः परिकीर्तितः ॥७८०॥
कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगु ॥७८१॥
मनुष्याणां पशूनां च दुःखाय प्रहृते सति ।
यथा यथा भवेद् दुःखं दण्डं कुर्यात्तथा तथा ॥७८२॥
अस्पृश्यधूर्तदासानां म्लेच्छानां पापकारिणाम् ।
प्रतिलोमप्रसूतानां ताडनं नार्थतो दमः ॥७८३॥
छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः ॥७८४॥
उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातनेषु स्वजातिषु ॥७८५॥

---

778 वि. र. p. 258, वीर॰ p 488 ( last half ).

779 अपरार्क p. 811, वि र. p. 274, वि. चि. p 77, वीर॰ pp. 481-82.

780 अपरार्क p 812, परा मा. III. p 412 ( reads अमीपणेन ), वि र p. 276, वि. चि. p. 77.

781 अपरार्क p 815 (no author named, reads गुरु for भृगुः), स्मृतिच॰ III. p. 762, वि र. p 265 (reads °घ्राणनासाक्षि॰), परा. मा. III. p. ( पादादिजिह्वानासाकरस्य ), वि. चि p 74, व्य. म. p. 230, वीर. p. 474.

782 परा. मा. III. p 417, वीर॰ p 475 (reads यथा महत्वं दुःखं)

783 अपरार्क p 813, वि. र. p 278, वि. चि p 78.

784 अपरार्क p. 813, परा. मा. III p 413 (reads °द्यैः पादाद्यो च), वि. र. p 262, वि. चि. p 72, व्य म. p. 230, वीर॰ p. 473 (°द्यै. स्पर्शने च)

785 वि. र. p. 262 ( reads सजातिषु ), परा. मा. III. p. 414, वि. चि. p. 78, वीर॰ p. 473.

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥७८६॥
देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानं च पण्डितैः ॥
समुत्थानव्ययं चासौ दद्यादाव्रणरोपणात् ॥७८७॥
वाग्दण्डस्ताडनं चैव येषूक्तमपराधिषु ।
हृतं भग्नं प्रदाप्यास्ते शोध्यं निःस्वैस्तु कर्मणा ॥७८८॥
श्रान्तांस्तृषार्तान्क्षुधितानकाले वाहयेन्नरः ।
खरगोमहिषोष्ट्रादीन्प्राप्नुयात्पूर्वसाहसम् ॥७८९॥
द्विपणो द्वादशपणो वधे तु मृगपक्षिणाम् ।
सर्पमार्जारनकुलश्वसूकरवधे नृणाम् ॥७९०॥
गोकुमारीर्देवपशूनुक्षाणं वृषभं तथा ।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधः ॥७९१॥
प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥७९२॥
वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥७९३॥
शिष्यं क्रोधेन हन्याच्चेदाचार्यो लतया विना ।
येनात्यर्थं भवेत्पीडा वादः स्याच्छिष्यतः पितुः ॥७९४॥

---

786 स्मृतिच॰ III, p. 762, परा. मा. III, p. 418, वि. र. p. 269, स. वि. p. 481, व्य. म. p. 231, वीर॰ p. 476.

787 स्मृतिच॰ III. p. 765, अपरार्क p. 816, परा. मा. III. pp. 419-420, व्य. म. p 232, वीर॰ pp. 476-77.

788 अपरार्क p. 816, वि. र. p. 270.

789 अपरार्क p. 818, वि. र. p. 280.

790 परा. मा. III. p 424, वि. र. p. 279 ( reads त्रिपणो ), वीर॰ p. 479 ( reads नकुलसूकराश्ववधे ).

791 वीर॰ p. 479 , परा. मा. III. p. 424 ( पशुमसर्वं वृषभं and वधे ) ascribes to मनु.

792 परा. मा. III. p. 425, वि. र. p. 284 ( प्रतिरूपं तु दापयेत् ).

793 वि. र॰ p. 284

794 स्मृतिच॰ III. p. 2'

( साहसम् )

सहसा यत्कृतं कर्म तत्साहसमुदाहृतम् ॥७९५॥

सान्वयस्त्वपहारो यः प्रसह्य हरणं च यत् ।
साहसं च भवेदेवं स्तेयमुक्तं विनिह्नवः ॥७९६॥

विना चिह्नैस्तु यत्कार्यं साहसाख्यं प्रवर्तते ।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः ॥७९७॥

एकं चेद्बहवो हन्युः संरब्धाः पुरुषं नराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ॥७९८॥

व्यापादनेन तत्कारी वधं चित्रमवाप्नुयात् ।
विनाशहेतुमायान्तं हन्यादेवाविचारयन् ॥७९९॥

उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते ।
निवृत्तास्तु यदारम्भाद् ग्रहणं न वधः स्मृतः ॥८००॥

आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः ॥८०१॥

उद्यतासिविषाग्निश्च चापोद्यतकरस्तथा ।
आथर्वणेन हन्ता च पिशुनश्चैव राजनि ॥८०२॥

भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥८०३॥

यशोवृत्तहरान्पापानाहुर्धर्मार्थहारकान् ।
अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते ॥
प्राणद्रव्यापहारे च तं विद्यादाततायिनम् ॥८०४॥

---

795 स. वि. p. 451.

796 स्मृतिच॰ III. p 733, वि. र. p. 287 ( reads सान्वयस्तु प्रहारो ), स. वि. p. 457 ( reads विनिह्नवे ).

797 स्मृतिच॰ III. p. 722, परा. मा. III. 453.

798 स्मृतिच॰ III. p 723, परा. मा. III p 454, वीर॰ p 501.

799 वि. र. p. 371 ( first half only ), स्मृतिच॰ III. p 727 ( latter half only ), the two halves are parts of different verses.

800 स्मृतिच॰ III., p. 729

801 स्मृतिच॰ III. p. 730, व्य म p 230.

802–803 स्मृतिच॰ III p 731, व्य. म. p. 241.

804 स्मृतिच॰ III. p. 731.

नखिनां शृङ्गिणां चैव दंष्ट्रिणां चाततायिनाम् ।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥८०५॥
गर्भस्य पातने स्तेनो ब्राह्मण्यां शस्त्रपातने ।
अदुष्टां योषितं हत्वा हन्तव्यो ब्राह्मणोऽपि हि ॥८०६॥
क्षतं भङ्गोपमर्दौ च कुर्याद्द्रव्येषु यो नरः ।
प्राप्नुयात्साहसं पूर्वं द्रव्यभाक्स्वाम्युदाहृतः ॥८०७॥
हरेच्छिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि ।
तद्गृहं चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम् ॥८०८॥
प्राकारं भेदयेद्यस्तु पातयेच्छादयेत्तथा ।
बध्नीयादम्भसो मार्गं प्राप्नुयात्पूर्वसाहसम् ॥८०९॥

(स्तेयम्)

प्रच्छन्नं वा प्रकाशं वा निशायामथवा दिवा ।
यत्परद्रव्यहरणं स्तेयं तत्परिकीर्तितम् ॥८१०॥
अन्यहस्तात्परिभ्रष्टमकामादुद्धृतं भुवि ।
चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत् ॥८११॥
तुलामानप्रतिमानप्रतिरूपकलक्षितैः ।
चरन्नलक्षितैर्वापि प्राप्नुयात्पूर्वसाहसम् ॥८१२॥
गृहे तु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांश्च दिक्पालान्यदि चौरो न लभ्यते ॥८१३॥

---

805 स्मृतिच॰ III. p. 782.

806 विश्वरूप on या II. 281.

807 अपरार्क p. 820, वि. र. p. 353, वि. चि. pp. 97-98.

808 अपरार्क p. 822, स्मृतिच॰ III. p. 757, वि. र. p. 364, वि. चि. p. 301 ( reads छिन्द्यात् for भिन्द्यात् ), स. वि. p. 474.

809 वि. र. p 367.

810 दायभाग p. 224

811 अपरार्क p. 841, मिता॰ on या. II. 268 ( ascribes to नारद ), वि. र. p. 337, परा. मा. III. p. 437 (ascribes to नारद).

812 वि. र. p 295, वि. चि. p. 80.

813–814 अपरार्क p. 844 ( reads आरक्षकान् ), वि. र. 343, 345 ( reads

ग्रामान्तरे हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं चौरोद्धर्ताविवीतके ॥८१४॥
स्वदेशे यस्य यत्किंचिद्धृतं देयं नृपेण तु ।
गृहीयात्तस्वय नष्टं प्राप्तमन्विष्य पार्थिव ॥८१५॥
चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।
तदभावे तु मूल्यं स्यादन्यथा किल्बिषी नृप ॥८१६॥
लब्धेपि चौरे यदि तु मोपस्तस्मान्न लभ्यते ।
दद्यात्तमथवा चौरं दापयेत्तु यथेप्सितं ॥८१७।
तस्मिन्थेह्वाप्यमानाना भवेद्दोपे तु संशय ।
सुपितं शपथं दाप्यो बन्धुभिर्वा विशोधयेत् ॥८१८॥
यस्मादपहृताल्लब्ध द्रव्यात्स्वरः तु स्वामिना ।
तच्छेरमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ॥८१९॥
स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधका ।
तेषा सर्वस्वमादाय राजा शूले निवेशयेत् ॥८२०॥
अचोराद्दापितं द्रव्यं चौरान्वेषणतत्परै ।
उपलब्धे लभेरंस्ते द्विगुणं तत्र दापयेत् ॥८२१॥
येन येन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यादङ्गं नृपस्तस्य न करोति यथा पुन ॥८२२॥
अपुपे बालके द्वे तु पञ्चाम्र पञ्चदाडिमम् ।
खर्जूरबदरादीनां मुष्टिं गृह्णन्न दुष्यति ॥ ८८२ अ ॥
मानवा सद्य एवाहु सहोढानां प्रवासनम् ।
गौतमानामनिष्ट परप्राणयुच्छेदाद्विगर्हितम् ॥८२३॥

---

ग्रामान्तेषु and त्ववीतके ) वि चि pp 94 95 (reads ग्रामान्ते and चौरो द्धर्ता विवीतके )

815-817 अपरार्क p 844, वि र p 345 ( reads नर for नृप ), वि चि p 95 ( has 815 818 )

818-819 अपरार्क p 844 वि र p 345-346 (ascribes them to वृद्धमनु)

820 अपरार्क p 845 वि र p 317 ( ascribes to नारद and कात्यायन )

821 वि र p 338

822 अपरार्क p 845 ( reads करात्येन ) वि र p 329 वि चि p 91

822 A गृहस्थरत्नाकर (attributes to बृहस्पति and कात्यायन).

823 वि र p 332

सहोढमसहोढं वा तत्त्वागमितसाहसम्
प्रगृह्याच्छिन्नमावेद्य सर्वस्वैर्विप्रयोजयेत् ॥८२४॥
अथ सन्धानगुप्तास्तु मन्द्रभक्ता बलान्विताः ।
कुर्युः कर्माणि नृपतेरामृत्योरिति कौशिकः ॥८२५॥
परदेशाद्धृतं द्रव्यं वैदेह्येन यदा भवेत् ।
गृहीत्वा तस्य तद्द्रव्यमदण्डं तं विसर्जयेत् ॥८२६॥
चोराणां भक्तदा ये स्युस्तथाग्न्युदकदायकाः ।
भेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ॥
समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तान् ॥८२७॥
अविद्वान्याजको वा स्यात्प्रवक्ता चानवस्थितः ।
तावुभौ चोरदण्डेन विनीय स्थापयेत्पथि ॥८२८॥
(स्त्रीसंग्रहणम्)
दूतोपचारयुक्तार्थैर्वेलास्थानसंस्थितिः ।
कण्ठकेशाञ्चलग्राहः कर्णनासाकरादिषु ।
एकस्थानासनाहाराः संग्रहो नवधा स्मृतः ॥८२९॥
स्त्रीषु वृत्तोपभोगः स्यात्प्रसह्य पुरुषो यदा ।
वधे तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥८३०॥
कामार्ता स्वैरिणी या तु स्वयमेव प्रकामयेत् ।
राजादेशेन मोक्तव्या विख्याप्य जनसंनिधौ ॥८३१॥

---

824 अपरार्के 849, त्रि. र p 332 ( reads प्रगृह्य विहमानेय ..र्विनियोजयेत् ), वि चि. p 92 ( reads सर्वस्वेन वियोजयेत् )
825 अपरार्के p. 849, त्रि र p 332, वि. चि. p 92 ( reads मन्दभक्त-गुणान्विताः )
826 अपरार्के p. 849, त्रि र. p 333 ( reads स्वदेशेषु समाहरेत् )
827 परा मा III p 446, त्रि. र. p. 340, वि चि. 93 ( reads केतारश्चोरभाण्डानां and has last two halves only), वीर p 498.
828 विश्वरूप on या. III, 252
829 स्मृतिच० III pp. 17–18
830 स्मृतिच० III p 742, व्य. म p. 244 ( reads कृतोपभोगः ), वीर p. 504
831 अपरार्के p 860.

आरम्भकृत्सहायश्च तथा मार्गानुदेशक ।
आश्रय शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥८३२॥
युद्धोपदेशकश्चैव तद्विनाशप्रदर्शक ।
उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदक ॥८३३॥
अनिषेद्धाक्षमो य स्यात्सर्वे तत्कार्यकारिण ।
यथाशक्त्यनुरूप तु दण्डमेषा प्रकल्पयेत् ॥८३४॥

( स्त्रीधर्म )

पत्या चाप्यवियोगिन्या शुश्रूषान्निर्विनीतया ।
सौभाग्यवद्वैधव्यकाम्यया भर्तृभक्तया ॥८३५॥
पतिशुश्रूषयैव स्त्री सर्वान्कामान्समश्नुते ।
दिव पुनरिहायाता सुखाना शेवधिर्भवेत् ॥८३६॥
मृते भर्तरि या साध्वी ब्रह्मचर्ये व्यवस्थिता ।
सारुन्धतीसमाचारा ब्रह्मलोके महीयते ॥८३७॥

( दायविभाग )

सकल द्रव्यजात यद्भागैर्गृह्णन्ति तत्समे ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥८३८॥
पैतामह समान स्यात्पितु पुत्रस्य चोभयो ।
स्वय चोपार्जित पित्रा न पुत्र स्वाम्यमर्हति ॥८३९॥
पैतामह च पित्र्य च यच्चान्यत्स्वयमर्जितम् ।
दायादाना विभागे तु सर्वमेतद्विभज्यते ॥८४०॥

---

832 834 अपरार्क p 821 ( ०क यदुक्तस्य ) परा मा III p 455 ( reads धर्मानुदशक तद्विनाशप्रवर्तक वक्तानुमोदका ) वि र p 375 ( reads दोषवक्तानु० ) वि चि p 107 ( युक्त्योपदेशकश्चैव तथा मार्ग प्रवर्तक and दोषवक्तानु० ) स वि p 464 ( omits the line अनिषेद्धा &c ) वीर० p 501 (reads दोषवक्तानुदेशक and दोषवक्तानुमोदक ) स्मृतिच० III pp 723–724 seems to attribute 832–833 to बृहस्पति and cites 834 as स्मृत्यन्तर

835–837 स्मृतिच० III p 589 591 596

838 स्मृतिच० III p 608 स वि p 354, व्य म p 98 वीर० p 571 ( reads पितरौ )

839 स्मृतिच० III pp 648 and 650

840 दायभाग p 105 स्मृतिच० III p 635 परा मा III p. 558, स वि p 367, वि चि p 134 वि र 496

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः ॥८४१॥
गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद्भृगुः ॥८४२॥
जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् ।
निर्भाजयेन्न चैवैकमकस्मात्कारणं विना ॥८४३॥
संप्राप्तव्यवहाराणां विभागश्च विधीयते ।
पुंसां च षोडशे वर्षे जायते व्यवहारिता ॥८४४॥
अप्राप्तव्यवहाराणां च धनं व्ययविवर्जितम् ।
न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च ॥८४५॥
प्रोषितस्य तु यो भागो रक्षेयुः सर्व एव तम् ।
बालपुत्रे मृते रिक्थं रक्ष्यं तत्तन्तुबन्धुभिः(रक्षितव्यं तु बन्धुभिः?)
पौगण्डाः परतस्तं तु विभजेरन् यथांशतः ॥८४५॥ अ
भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तद्रिक्थिभिः सर्वमेव तु ॥८४६॥
तदृणं धनिने देयं नान्यथैव प्रदापयेत् ।
भावितं चेत्प्रमाणेन विरोधात्परतो यदा ॥८४७॥
धर्मार्थं प्रीतिदत्तं च यदृणं स्यान्नियोजितम् ।
तद् दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥८४८॥

---

841 अपरार्क p. 723, स्मृतिच० III p. 648 ( first half ) and p. 636 ( latter half ), वि. र. p. 498

842 अपरार्क p. 723 ( reads ०कर्मिणः, दृश्यमानं विभाज्यं तु ), स्मृतिच० III. p. 635, परा. मा. III p. 557, वि. र. p. 498.

843 वीर० p. 559, दायभाग p. 56.

844 अपरार्क p. 722.

845 दायभाग p 62, वीर० p 587.

845 A वि. र. p. 599.

846 अपरार्क p. 722, हरदत्त on आप. ध. सू. II. 6. 14 1, स्मृतिच० III. p. 616, व्य. म. p. 122, स वि. p. 356, वि. र. 496.

847 अपरार्क p 722, वि. र. p. 497.

848 स्मृतिच० III. p. 617, अपरार्क p 723 and स. वि. p. 356, विर. p. 497 ( read स्वनियोजितम् ).

उत्पद्ये चौरसे पुत्रे चतुर्थांशहरा सुता ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजना ॥८५७॥
कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते ।
पुत्राणां तु त्रयो भागा साम्यं त्वल्पधने स्मृतम्॥८५८॥
क्षेत्रिकस्य मतेनापि फलमुत्पादयेत्तु य. ।
तस्येह भागिनौ तौ तु न फलं हि विनैकत. ॥८५९॥
क्लीब विहाय पतितं या पुनर्लभते पतिम् ।
तस्या पौनर्भवो जातो व्यक्तमुत्पादकस्य स ॥८६०॥
न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।
मेढ्रश्चोन्मादशुक्राभ्यां हीन क्लीव स उच्यते ॥८६१॥
अक्रमोढासुतश्चैव सगोत्राद्यस्तु जायते ।
प्रव्रज्यावसितश्चैव न रिक्थ तेषु चार्हति ॥८६२॥
अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितु ।
असवर्णप्रसूतश्च क्रमोढायां च यो भवेत् ॥८६३॥
प्रतिलोमप्रसूता या तस्या पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतम् ॥८६४॥

---

857 मिता० on या II 132, अपरार्क p 733, परा मा III p 516, स वि p 393, वि चि p 150 ( reads तृतीयांशहरा and •च्छादनभागिन ), वीर० p 615, दायभाग p 148 ( reads तृतीयांशहरा and भागिन for भाजना ), मद पा p 658

858 दायभाग p 69, स्मृतिच० III p 626, वीर० p 582, वि र p 494

859–60 वीर० pp 604, 608, वि र 564 ( has 860 only ) वि र p 557 has a verse similar to 859, which it ascribes to नारद and कात्यायन It is क्षेत्रिकानुमते बीज यस्य क्षेत्रे प्रजायते । तदपत्य तयोरेव बीजिक्षेत्रिकयोर्मतम् ॥

861 दायभाग p 102

862 दायभाग 103 अपरार्क p 760, स्मृतिच० III p 630, परा मा. III p 546, व्य म. p. 163, वि चि p 133, वीर० p 712, वि र p 491

863–864 दायभाग p 103 ( reads प्रतिलोमप्रसूते य and ग्रासाच्छादनमात्र तु ), व्य म p 164, वीर० p 712, वि र p 491, वि चि p. 134 ( has 863 ).

बन्धूनामप्यभावे तु पितृद्रव्यं तदाप्नुयात् ।
अपित्र्यं द्रविणं प्राप्तं दापनीया न चान्यथा ॥८६५॥

( अविभाज्यानि )

स्वशक्त्यापहृतं नष्टं स्वयमाप्तं च यद्भवेत् ।
एतत्सर्वं पिता पुत्रैर्विभागे नैव दाप्यते ॥८६६॥
परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥८६७॥
उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥८६८॥
शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ॥८६९॥
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥८७०
परं निरस्य यल्लब्धं विद्यातो द्यूतपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥८७१॥
विद्याप्रतिज्ञया लब्धं शिष्याच्चाप्तं च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥८७२॥

---

865 स्मृतिच॰ III. p 632, दायभाग p 103 ( reads स्वपित्र्यं तद्धनं ), वीर॰ p. 712 ( reads स्वपित्र्यं तद्धनं प्राप्तं ), वि र p 491 ( अपित्र्यं तद्धनं )

866 अपरार्क p. 728, स्मृतिच॰ III. p 651, परा मा III p. 493 ( reads ॰हृत द्रव्य )

867 मिता॰ on याँ II 118-119, अपरार्क p 724, हरदत्त on आप ध सू II 6 14 1, कुल्लूक on मनु 9 206, स्मृतिच॰ III p. 637, परा मा III p 559, मद पा p 685

868-870 दायभाग pp 122-123 ( reads शिल्पेष्वपि ), अपरार्क p 724, परा. मा III p 559, वि र 502 ( reads परभक्तप्रदानेन and शिल्पेष्वपि ), वि. चि p 136 स वि p 368, कुल्लूक on मनु 9 206 ( has 868-69 ), स्मृतिच॰ III p 637

871-872 अपरार्क p 724, वि. र p 502, स्मृतिच॰ III p. 637, परा मा III. p. 559 ( reads विद्यातोऽद्यूतपूर्वकम् and has only 871 ), व्य म p. 125, दायभाग p. 123 (has 871 only) The परा मा, स्मृतिच॰ and व्य म read 870 after 872 ·

विद्याबलकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोन्यथा ॥ ८७३ ॥
कुले विनीतविद्यानां भ्रातॄणां पितृतोपि वा ।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥ ८७४ ॥
नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित् ।
समविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥ ८७५ ॥
आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥
तत्र लब्धं तु यत्किञ्चिद् धनं शौर्येण तद्भवेत् ॥८७६॥
शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु विभाज्यं नैव रिक्थिभिः ॥८७७॥
ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ।
संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते॥८७८॥
यल्लब्धं दानकाले तु स्वजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं स्मृतम् ॥ ८७९ ॥
वैवाहिकं तु तद्विद्याद्भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधकम् ॥ ८८० ॥

---

873 अपरार्क p. 724 ( reads विद्यापणकृतं चैव ), स्मृतिच॰ III, p. 637, परा. मा. III, p. 559, वि. र. p. 502 ( reads विद्यापणकृतं चैव ).

874 स्मृतिच॰ III p. 638-39, परा. मा. III. p. 560, व्य. म. p. 126, वि. चि. p. 136.

875 अपरार्क p. 725, स्मृतिच॰ III. p. 639, दायभाग p. 108, व्य. म. p. 126, वि. चि. p. 136, वि. र. p. 500, हरदत्त on आप. ध. सू. II. 6-14-1.

876 अपरार्क p. 725, स्मृतिच॰ III. p. 639-40, दायभाग p. 126, व्य. म. p. 127, वि. चि. p. 137.

877 परा. मा. III. p. 561

878 अपरार्क p. 725, दायभाग p. 126, स्मृतिच॰ III. p. 640, परा. मा. III. p. 561, व्य. म. p. 127, वि. चि. p. 137.

879-880 अपरार्क pp. 723-724 ( reads लग्नकाले for दानकाले and प्रीतिकरं for वृद्धिकरं ), स्मृतिच॰ III. pp. 640-641, वि. चि. p. 137, व्य. म. p. 128 ( reads लग्नकाले )

विवाहकाले यत्किंचिद्वरायोद्दिश्य दीयते ।
कन्यायास्तद्धनं सर्वमविभाज्यं च बन्धुभिः ॥ ८८१ ॥
धनं पत्रनिविष्टं तु धर्मार्थं च निरूपितम् ।
उदकं चैव दासश्च निबन्धो यः क्रमागतः ॥ ८८२ ॥
धृतं वस्त्रमलंकारो नानुरूपं तु यद्भवेत् ।
यथा कालोपयोग्यानि तथा योज्यानि बन्धुभिः ॥८८३॥
गोप्रचारश्च रक्षा च वस्त्रं यच्चाङ्गयोजितम् ।
प्रयोज्यं न विभज्येत धर्मार्थं च बृहस्पतिः ॥ ८८४ ॥
देशस्य जातेः सङ्घस्य धर्मो ग्रामस्य यो भृगुः ।
उदितः स्यात् स तेनैव दायभागं प्रकल्पयेत् ॥८८४ अ

( प्रच्छादितविषयस्य पुनर्विभागः )

प्रच्छादितं यदि धनं पुनरासाद्य तत्समम् ।
भजेरन्भ्रातृभिः सार्धमभावे हि पितुः सुताः ॥ ८८५ ॥
अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत् ।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः ॥ ८८६ ॥
विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत् ।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भजेत् ॥ ८८७ ॥
बन्धुनापहृतं द्रव्यं बलाद्वेय प्रदापयेत् ।
बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् ॥ ८८८ ॥

---

881 अपरार्क p 751 (without name), स्मृतिच० III p 641.

882-884 अपरार्क pp. 725 726 ( reads दासाश्च for दासश्च ), स्मृ. म. p. 131 ( has 882 883 ), दायभाग has 884 and reads रथ्या for रक्षा, प्रायोज्यं for प्रयोज्य and शिल्पार्थं for धर्मार्थं, वि र. pp. 504-505 ( दाराश्च for दासश्च and शिल्पार्थं )

884A वि र. p 505

885-887 अपरार्क pp 732-733 ( has 885, first half of 886 and latter half of 887), स्मृतिच० III pp 714-715 (has all three), दायभाग p 221 ( has 885 886 and reads प्रच्छादितं तु यदेन पुनरासाद्य and अभावेपि हि तत्सुताः ) वि. चि. p. 132 ( has 885 886 and reads as दायभाग does ), स. वि pp 438-439 ( has all three ), वि र. p. 526.

888 दायभाग p 222, वि चि. p. 144 ( latter half ), वीर० p. 707, वि. र. p 526

( बहोः कालादपि साधारणक्षेत्रविभागः )

क्षेत्रं साधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः ।
तद्वंश्यस्यागतस्यांशः प्रदातव्यो न संशयः ॥ ८८९ ॥
तृतीयः पञ्चमो वापि सप्तमश्चापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥ ८९० ॥
यं परंपरया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥ ८९१ ॥
विभक्ताः पितृवित्ताच्चेदेकत्र प्रतिवासिनः ।
विभजेयुः पुनर्द्व्यंशं स लभेतोदयो यतः ॥ ८९२ ॥

( विभक्तचिह्नानि )

वसेयुर्दश वर्षाणि पृथग्धर्माः पृथक्क्रियाः ।
भ्रातरस्तेऽपि विज्ञेया विभक्ताः पैतृकाद्धनात् ॥ ८९३ ॥

( स्त्रीधनलक्षणं स्त्रीधनप्रकाराश्च )

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतितः स्त्रियै ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ ८९४ ॥
विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥ ८९५ ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकं चैव स्त्रीधनं तदुदाहृतम् ॥ ८९६ ॥

---

889-891 वि चि p 132, व्य म. pp 101 102 ( has 889, but assigns no name and reads क्षेत्रसाधारण and ascribes 890 to बृहस्पति ), स्मृतिच० III pp 712 713 ascribes all three to बृहस्पति.

892 दायभाग p 110

893 अपरार्क p 757 (reads वसेयुर्ये दशाब्दानि and विभक्ता भ्रातरस्ते च विज्ञेया पैतृके धने), स्मृतिच० III p 719, व्य नि p 443

894 दायभाग p 72 (ascribes to मनु and कात्यायन ), वि र p 522 and वि चि p. 188 ( also do so )

895-897 मिता on या II 143, अपरार्क p 751 ( reads पादवन्दनिकं तत्तु लावण्यार्जितमुच्यते ) स्मृतिच० III p 651, परा मा III p. 547, कुल्लूक on मनु 9 194 ( has 895-898 and reads नीयमाना तु पैतृकात् ), वि. र. p. 524 and वि चि p. 133 (reads यल्लावण्यार्जितं.

प्रीत्या दत्तं तु यत्किंचित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥ ८९७ ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम् ।
मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम्॥८९८॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयं तदुक्तं तु लब्धं बन्धुकुलात्तथा ॥ ८९९ ॥
ऊर्ध्वं लब्धं तु यत्किंचित् संस्कारात् प्रीतितः स्त्रिया ।
भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः ॥ ९०० ॥
ऊढया कन्यया वापि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥९०१

( स्त्रीधने स्वाम्यादिविचारः )

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥ ९०२ ॥
यत्तु सोपाधिकं दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राथवा पत्या न तत्स्त्रीधनमिष्यते ॥ ९०३ ॥

---

मुच्यते and नीयमाना हि पैतृकात् ), मद. पा. p 671 ,दायभाग p. 78, ( has 895 96 and reads नीयमाना हि पैतृकात् )

898 दायभाग p. 93, अपरार्क p 752, स्मृतिच० III p 652, व्य म p 153, वीर० p 690, वि. र. p 525, मद. पा. p 671

899-900 दायभाग p. 71 ( has both ), वि र p 524 ( has both and reads स्वकुलात्तथा), परा. मा III. p. 549 has 899 and reads लब्धं पितृकुलात्तथा, व्य. म. p 153 and वि चि p. 139 have 899 only and read यल्लब्धं स्वकुलात्तथा, मिता० on या II. and 144 स. वि. p 380 (have 899 and लब्धं पितृकुलात्तथा), वीर० p.690 has 899 and reads as व्य म. does अपरार्क p.752 and स्मृतिच० III. p.652 read one verse as विवाहात् ..स्त्रिया । भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः ॥

901 मिता० on या. II 143, वीर० p 690, व्य म 155, परा मा. III. p. 549, अपरार्क p. 751 दायभाग p 76 reads भर्तुः सकाशात्.

902 स्मृतिच० III. p 652, परा. मा III p. 548, व्य. म. p 154.

903 स्मृतिच० III p 653, परा मा III p. 549, p व्य. म. p. 154, वीर० p. 688.

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥९०४॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥९०५॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥९०६॥
भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा ॥९०७॥
अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि चेत्प्रतिदाप्यः स तद्बलात् ॥९०८॥
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनां तथा ॥९०९॥
लिखितस्यैनि धर्मोऽयं प्राप्ते भर्तृकुले वसेत् ।
व्याधिता प्रेतकाले तु गच्छेद्बन्धुजनं ततः ॥९१०॥
न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥९११॥
यदि ह्येकतरोऽप्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं प्रदाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥९१२॥

---

904 स्मृतिच० III. p. 654, परा मा III. p 550, व्य. म. p. 154, वीर० p. 689, दायभाग p 76.

905 अपरार्क p. 752, स्मृतिच० III. p. 654, परा. मा. III p. 549, वि. चि. p 139 ( reads दत्तं तत्प्रजीवन ), वीर० p 691, दायभाग p. 76 ( reads तैर्दत्तःप्रजीवनम् ).

906–907 स्मृतिच० III p 655 (both), अपरार्क p. 752 (has only 906), दायभाग pp 76 and 73, वि. चि pp 139-140 (has both), वीर० p. 691 and व्य म. p. 155 ( have only 906 ), वि. र. pp. 510-511.

908–909 अपरार्क p 755 (reads आददीत), दायभाग p 78 (reads विसृष्टमपि), स्मृतिच० III p 658, वीर० p. 692, वि. र. p. 514.

910 अपरार्क p. 755 ( first half only ), वि. चि. p 141, वि. र p. 514 ( has whole verse ).

911–915 दायभाग p. 78 and अपरार्क p. 754 (read गृहस्थ and यदास्त्री). स्मृतिच० III. p., 656, व्य. मा. p. 286 (has 911-912), व्य.म. pp.

